श्री

# कर्पूरप्रकर.

मूल, टीका अने भाषांतर स[illegible]

---

आ पुस्तक समस्त चतुर्विध श्री[illegible]
वांचवा योग्य जाणी
तेने
छपावी प्रसिद्ध करनार,
जैन विद्याशालाना शास्त्री
हरिशंकर कालीदास,
दोशीवाडानी पोल,—अमदावाद.

---

अमदावाद.
निर्मळ प्रिन्टिंग प्रेस, मदनगोपालनी हवेलीमां
कल्लुभाई ईश्वरदास त्रिवेदीए छाप्युं.

संवत १९५७. सन १९०१.

किम्मत रु० ०–१२–०.

# प्रस्तावना.

जैनधर्मनां घणुं पुस्तको अज्ञानरूप अंधकारनो नाश करनारां छे छतां श्रीवज्रसेन सूरिना शिष्य हरिमुनिये रचेलुं चिंतामणि रत्न तुल्य कर्पूरप्रकर नामनुं पुस्तक पोतानी काव्य चमत्कृतिथी अने रस तथा अलंकारोथी माणसोने अनहद आनंद उपजावे छे. मुनिये चोराशीद्वार देखाडवाना मीषथी जुदां जुदां काव्योवडे घणो सरस उपदेश आपेलो छे के, जेने सांभलवाथी माणसोनां मन सहजमां आनंद पामेछे. मूल ग्रंथ उपर श्री जिनवर्द्धन सूरिनी पाटे थयेला श्री जिनचंद्र सूरिना शिष्य जिनसागर सूरिये सरल संस्कृत टीका रची छे ते एटलाज हेतुथी के, भविष्यमां थनारी प्रजा थोडुं संस्कृत जाणनारी होय तो पण तेनो लाभ लइ शके. परंतु हालमां काल महात्म्यने लीधे संस्कृतनो परिचय ओछो थइ जवाथी आवा रसदायक सरल ग्रंथनो लाभ लेवाने हालनी प्रजा अशक्त थइ पडी छे. माटे ए ग्रंथनो हालनी प्रजा पण लाभ लइ शके एवा हेतुथी अमे तेनुं सरल गुजराती भाषांतर करी मूल, टीका अने गुजराती भाषांतर सहित ते पुस्तक छपावी बहार पाडयुं छे. वली संस्कृत वांचनारोने सुगमता थवा माटे टीकामां घणु सरल शब्दो वापर्या छे. हुं आशा राखुं छुं के, सज्जनो आ ग्रंथनो आदिथी अंत सुधी वांचवानो लाभ लइ महान् पुरूषे करेलो उपकार भूलशे नहीं.

आ ग्रंथनुं गुजराती भाषांतर करती वखते टीकानी त्रण प्रतो एकठी करी हती, परंतु ते त्रण केटलेक ठेकाणे अशुद्ध तेमज संबंध विनानी हती; तेने सुधारी लेवामां आवी छे. तो पण कोइ ठेकाणे दृष्टिदोषथी अशुद्ध रही गयुं होय तो ते सज्जन पुरुषोए सुधारी लेवुं.

ल. प्रसिद्धकर्ता.

॥ श्री सर्वज्ञाय नमः ॥

# ॥ कर्पूरप्रकर ॥

॥ ग्रंथकर्त्ता एक काव्यथी आशिर्वादरूप मंगलाचरण करे छे ॥

( शार्दूलविक्रीडितवृत्तम्. )

कर्पूरप्रकरः शमामृतरसे वक्त्रेंदुचंद्रातपः,
शुक्लध्यानतरुप्रसूननिचयः पुण्याब्धिफेनोदयः ॥
मुक्तिश्रीकरपीडनेऽच्छसिचयो वाक्कामधेनोः पयो,
व्याख्यालक्ष्यजिनेशपेशलरदज्योतिश्चयः पातु वः ।१।

कर्पूरेति । व्याख्या व्याख्यानं तत्र लक्ष्यो दृश्यमानो यो जिनेशो जिनेश्वरस्तस्य पेशलाश्चते रदाश्च पेशलरदास्तेषां ज्योतिः कांतिस्तस्य चयः समूहो वो युष्मान् पातु रक्षतु । कथंभूतः ज्योतिश्चयः । शमामृतरसे शमः शमनप्रक्रमः सएवामृतरसः पीयूषच्छटानिर्यासस्तत्र कर्पूरस्य प्रकर इव कर्पूरप्रकरः घनसारराशिरित्यर्थः ॥ पुनः किंभूतः । वक्त्रमेव मुखमेवेंदुश्चंद्रस्तस्य चंद्रातप इव चंद्रातपः । मुखचंद्रकौमुदीसदृशः यथा चंद्रे कौमुदी भवति जिनेशमुखदंतकांतिकौमुदीव शुभ्रत्वात् । पुनः किंविशिष्टः । शुक्लध्यानमेव केवलज्ञानमेव तरुः सच्छायत्वाद्वृक्षस्तस्य प्रसूनानां निचय इव प्रसू

ननिचयः कुसुमसमूहः। पुनः किंभूतः । पुण्यमेव धर्मएवाब्धिः समुद्रस्तस्य फेनोदय इव डिंडीरपिंडोच्छाय इव पुण्याब्धिफेनो दयः ॥ पुनः किंभूतः । मुक्तिरेव श्रीः मुक्तिश्रीः सिद्धिलक्ष्मीस्त स्याः करपीडने विवाहेऽच्छो निर्मळः सिचयइव वस्त्रमिवाच्छसिच यः । पुनः किंविशिष्टः ।वाग् वाणी सैव कामधेनुः कामदुघा तस्याः पय इव दुग्धमिवपयः ॥ एतावता कर्पूरचंद्रातपप्रसूननिचयफे नोदयाच्छसिचयपयःसमानोज्वलो जिनदंतकांतिसमूहो वो र क्षतु ॥ १ ॥

शांतिरूप अमृतजलने विषे कपूरना समूह समान, मुखरूप चंद्रमानी ज्योत्स्ना (चांदणी) समान, केवलज्ञान रूपी वृक्षना पु ष्पना समूह समान, पुण्यरूप समुद्रना फीणना उदय समान, मुक्ति रूप श्री (वधु)ना विवाहने विषे निर्मल वस्त्र समान अने वाणीरूप कामधेनुना दूध समान एवो जे जिनेश्वर भगवाननो व्याख्यान समये देखातो मनोहर दांतनी कांतिनो समूह, ते तमारु रक्षण करो. ॥१॥

हवे आ ग्रंथने विषे कहेवानां द्वारनां नामो एक काव्यथी कहेछे.

( स्रग्धरावृत्तम्. )

भव्या लब्ध्वार्यदेशं कथमपि नृभवं सत्कुलं साधुसंगं,
बोधं देवादिशक्तीः कुरुत शमयतिश्रावकत्वव्रतानि ॥
सप्तक्षेत्रींजिनार्चानयविनयसुवैराग्यदानादिपुष्टिं,
शब्दद्यूतक्रुधादेर्जयमपि सुकृताहेषु सत्कर्म मुक्त्यै ॥२॥

भव्येति ॥ भो भव्या भाविकाः ! आर्यदेशं पुण्यवांक्षिगमं १ कथमपि महता कष्टेनापि २ नृभवं मनुष्यजन्म ३ सत्कुलं प्रधान वंशं ४ साधुसंगं सत्पुरुषसंगतिं ५ बोधं उपकारकार्युपदेशवचनं ६ देवादि देवः सर्वज्ञः आदिर्यस्य तत् आदिशब्दात् सम्यक्त्वगुरुधर्माणां त्रयाणां ग्रहणं १० शक्ति शरीरसामर्थ्यं ११ लब्ध्वा प्राप्य॥ किं कुरुते त्याह ॥ शमं उपशमं १२ यतित्वं साधुत्वं १३ श्रावकत्वं श्राद्धत्वं १४ व्रतानि द्वादशव्रतानि २६ कुरुत विधत्त ॥ पुनः किं कुरुते त्याह ॥ सप्तक्षेत्रीः जिनभवनबिंबपुस्तकादिकाः ३३ जिनार्चा देवपूजां ३४ नयं न्यायं ३५ विनयमभ्युत्थानादिकं ३६ सुवैराग्यं विरागतासिद्धितंत्रं ३७ दानादि दानमादिर्यस्य तत् । आदि शब्दाच्छीलं तपो भावना च तेषां पुष्टिं पोषणं कुरुत ॥ पुनः किं० । शब्दद्यूतक्रुधादेः ( आदि शब्दग्रहणात् रूपरसगंधस्पर्शानां । मांस सुरापानवेश्यापापर्द्धिस्तेयपरस्त्रीणां । क्रोधमानमायालोभानां च । शब्दद्यूतक्रुधादेरित्यत्रादिशब्देन प्रतिपदमेतेऽनुक्रमेण ग्राह्या ) जयं कुरुत ॥ भूयः किंकुरुतेत्याह ॥ सुकृताहेषु सुकृतस्य पुण्यस्याहानि दिवसानि तेषु सत्कर्म मुक्त्यै सिद्धये कुरुत ॥ इति द्वारकाव्यं व्याख्यातं ॥ २ ॥

हे भव्यजनो ! महाकष्टथी प्राप्त थयेला कोइ पुण्यना उदयथी आर्यदेशने, सारा कुलने, मनुष्य जन्मने अने साधु पुरुषना संगने पामीने मुक्तिने माटे सम्यक्त्वने; देव, गुरु अने धर्मने विषे शक्तिने; उपशमपणुं, यतिपणुं, श्रावकपणुं अने श्रावकना बारव्रत तेना आराधनने; सातक्षेत्र, जिनपूजन, न्याय, विनय, वैराग्य, दान, शील, तप अने

भावर्तीना पुष्टितः शब्द, रुप, रस, गंध, स्पर्श, द्युत, मांस सुरापान, वेश्यागमन, पापसंपत्ति, चोरी, परस्त्रीगमन, क्रोध, मान, माया, लोभ व विगेरेना अयमें अने पुण्यना दिवसने विषे सारा कार्यने करो. ॥२॥

हवे बे काव्यथी आर्यदेशनुं स्वरूप कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

**कोऽपि स्याल्लघुकर्मकः सुकृतधीर्देशेऽप्यनार्ये स्वत–**
**स्तस्याप्यार्द्रकुमारवद्गुणचयः किंत्वार्यदेशाश्रयात् ॥**
**क्षाराब्धौ शशिनोऽथ कौस्तुभमणेःसाश्रीःकुतोयाऽभवत्,**
**गंगाशालिनि शंभुमूर्ध्नि कमलागारे हरेश्चोरसि ॥ ३ ॥**

कोऽपीति । कोऽपि कश्चिदनार्येऽपिदेशे म्लेच्छमंडलेऽपि स्वतः स्वयमेव लघुकर्मको लघु कर्म यस्येति सुकृतबुद्धिः पुण्यबुद्धिः स्याद् भवेद् ॥ तस्य लघुकर्मकस्यापि किंत्वार्यदेशाश्रयात् पुण्य युक्तदेशाश्रयणाद्गुणचयो गुणसमूहः स्यात् । किंवत् । आर्द्रकुमा रवत् । यथार्द्रकुमारो लघुकर्मकोऽनार्येऽपि देशे पुण्यबुद्धिरभूत् ॥ तद्वदन्यस्यापि जीवस्यार्यदेशाश्रयात् सम्यक्त्वादि लाभो भवति ॥ अत्र लौकिकदृष्टांतमाह ॥ शशिनश्चंद्रस्य सा श्रीः शोभा क्षाराब्धौ क्षारसमुद्रे कुतः । या श्रीर्गंगाशालिनि जाह्नवीमनोहरे शंभुमूर्ध्नि ह रमस्तकेऽभवत् । अथ शब्दश्चशब्दार्थः । कौस्तुभमणेश्च सा श्रीः शो भा क्षीरसमुद्रे कुतोऽभूत् । या श्रीर्हरेरुरसि नारायणस्य हृदयेऽभ वत् । किंभूते हृदये । कमलागारे कमलाया आगारं कमलागारं तस्मिन् लक्ष्मीगृहे ॥ ३ ॥

कोइ लघुकर्मि जीव अनार्य देशने विषे उत्पन्न थइने पोतानी मेळे धर्मबुद्धिवालो थाय छे, तो तेने पण आर्द्रकुमारनी पेठे आ येदेशना आश्रयथी गुणसमूह प्राप्त थाय छे. इहां दृष्टांत कहेछे. गंगाथी शोभता एवा शंकरना मस्तकने विषे चंद्रनी अने लक्ष्मीना निवास स्थान एवा कृष्णना हृदयने विषे कौस्तुभमणिनी जेवी शोभा छे, तेवी खारा समुद्रमां चंद्रनी अने कौस्तुभमणिनी शोभा क्यांथी होय ? अर्थात् नज होय. ॥ ३ ॥

आर्यं देशमवाप्य धर्मरहितोऽप्यन्यस्य धर्मक्रियां,
धर्मस्थानमहांश्च वीक्ष्य सुगुरोःश्रुत्वा च धर्मं क्वचित् ॥
बोधं याति कुलोत्थनास्तिकमतो भूपःप्रदेशी यथा,
सत्यं चंदनसंगिनःक्षितिरुहो नान्येऽपि किं चंदनाः ॥४॥

आर्यमिति॰। धर्मेणरहितो धर्मरहितः कोऽपि प्राणी। आर्यं देशमवाप्य प्राप्य बोधं याति उपदेशं गच्छति। किं कृत्वा। अन्यस्यान्यमनुजस्य धर्मक्रियां पुण्यकर्तव्यं वीक्ष्य दृष्ट्वा। च पुनः धर्मस्थान महान् धर्मस्य स्थानं तस्य महांस्तान् पुण्यस्थानमहोत्सवानवलोक्य ॥ पुनः किं कृत्वा। क्वचित् कदाचित् सुगुरोः सकाशात् धर्म्मं श्रुत्वाकर्ण्य ॥ क इव बोधं याति ॥ प्रदेशी भूप इव यथा प्रदेशी नाम राजाऽऽर्यं देशं लब्ध्वा धर्मरहितोऽप्यन्यस्य सुबुद्धिमंत्रिणो धर्मकार्यं दृष्ट्वा सुगुरोः केशिगणधरात् धर्मं श्रुत्वा बोधं गतवान् तथाऽन्योऽपि ॥ किंभूतः प्रदेशी ॥ कुलोत्थं नास्तिकमतं यस्यसः कुलोत्थनास्तिकमतः कुलक्रमागतचार्वाकधर्म इत्यर्थः. एवं विधोऽपि ॥ दृष्टांतमाह ॥ पूर्वोक्तस्वरूपं सत्यं । चंदनसंगिनश्चंदनवृक्षाश्लेषवंतः सं

तोऽपि क्षितिरुहो वृक्षाः किं चंदना नस्युश्चंदनवृक्षाः किं न भवंति ? अपि तु भवंत्येवेति ॥ ४ ॥

धर्मरहित प्राणी पण आर्यदेश पामीने, बीजाओनी धर्मक्रिया तेमज धर्मना स्थानोना महोत्सवोने जोइने अने कोइ वखत सुगुरुथकी धर्म सांभलीने कुलपरंपराथी नास्तिक मतवाला प्रदेशी राजानी पेठे बोध पामे छे; ए सत्य छे. दृष्टांत कहछे के, चंदनवृक्षना संगवालां बीजां वृक्षो पण शुं चंदन नथी थतां ? अर्थात् थाय छे. ॥४ ॥

हवे बे काव्ये करीने कथमपि द्वार कहे छे.

उत्सर्पिण्यवसर्पिणीः क्षितिमरुत्तेजोप्स्वसंख्या वने–
ऽनंतास्ता विकले गणेयशरदो जात्याविपत्त्या नयेत् ॥
सप्ताष्टौ तु भवांस्तिरश्चि मनुजे जीवोऽतरेत्रास्य चे–
द्धर्मस्तद्धरणेंद्रवत्स सुगतिं प्राप्नोति तिर्यङ्ङपि ॥ ५ ॥

॥ उत्सर्पीति ॥ जीवः प्राणी क्षितिमरुत्तेजोऽप्सु क्षितिश्च मरुच्च तेजश्चापश्च क्षितिमरुत्तेजोपस्तेषु पृथ्वीवायुवन्हिपानीयकायेष्वसंख्या उत्सर्प्पिण्यवसर्प्पिणीर्नयेत् प्रापयेत् भ्राम्यतीत्यर्थः ॥ वने वनस्पतिकायेऽनंता उत्सर्प्पिण्यवसर्प्पिणीर्नयेत् ॥ विकले विकलेंद्रिये गणेयशरदो गणनीयवर्षाणि नयेत् । कया । जात्या जन्मना विपत्त्या मरणेन । तिरश्चि तिर्यग्योनौ मनुजे मानुष्यभवे सप्ताष्टौ वा भवान् नयेत् ॥ अत्रांतरेऽस्मिन् समयेऽस्य जीवस्य चेद्यदि धर्मं पुण्यं स्यात् । तदा तिर्यङ्ङपि जीवः सुगतिं प्राप्नोति ॥ किंवद्धरणेंद्रवत् ॥ यथा धरणेंद्रः श्रीपार्श्वनाथदत्तनमस्कारश्रद्धधानो धर्मतो हिंस्रोऽपि सुगतिं प्राप तथाऽन्येऽपि ॥ ५ ॥

था जीव पृथ्वीकाय, वाउकाय, तेउकाय अने अपकायने विषे असंख्य उत्सर्पिणी अने अवसर्पिणी काल निर्गमन करे, वनस्पतिकायने विषे अनंत उत्सर्पिणी अने अवसर्पिणी कालपर्यंत रहे. विकलेंद्रिय (बेइंद्रिय, तेरिंद्रिय अने चौरिंद्रिय) ने विषे जन्म मरणे करीने संख्याता वर्ष रहे अने तिर्यंच तथा मनुष्यने विषे सात अथवा आठ भव करे. आम आ छेल्ला गणावेला भवने विषे जो ते जीवने धर्म प्राप्त थाय, तो ते भलेने तिर्यंच होय, तो पण ते धरणेंद्रनी पेठे उत्तमगति मेळवे छे. ॥ ५ ॥

## कालप्राणिभवा अनादिनिधनास्तत्सर्वजातौ सदा,
## जीवेन भ्रमता मुहूर्त्तमपि हि प्राप्तं न किंचिद्धितम् ॥
## मुक्तासुक्तिकयेव वारिमणिकृद्वाद्धौ क्वाचिद्दैवत--
## स्तत्प्राप्याथ सकंवलेन शवलेनोक्ष्णेव धार्यं श्रिये॥६॥

कालेति । कालप्राणिभवाः कालश्च प्राणी च भवश्च कालप्राणिभवा अनादिनिधना आदिश्चनिधनश्चादिनिधनौ नास्त्यादिनिधनौ येषांते तथा अजन्ममरणा वर्तते । तत्तस्माद्धेतोः सर्वजातौ समस्तयोनौ सदा सर्वदा भ्रमता पर्यटता जीवेन प्राणिना मुहूर्त्तमपि घटिकाद्वयमपि किंचिदल्पं हितं धर्मलक्षणं सुखं न प्राप्तं नोपलब्धं ॥ अथ क्वचित् कापिप्रस्तावे दैवतोऽनुकूलदैववशात् तद्धितं धर्मं प्राप्य लब्ध्वा जीवेन श्रिये लक्ष्म्यै धार्यं धेयं ॥ किंवत् ।मुक्तासुक्तिकयेव मुक्तायाः सुक्तिका तयेव । यथा मुक्तासुक्तिकया वार्द्धौ समुद्रे कचिद्दैववशान्मणिकृद्वारि मौक्तिककारि जलं लक्ष्म्यै ध्रियते तथा ॥ दृष्टांतमाह ॥ शवलेनोक्ष्णेव शवल नाम्ना वृषेणेव ।

किंभूतेनोष्णा ॥ मर्कवलेन कंबलसहितेन । यथा पुरा शंबलकंब लौ द्वौ वृषभावभूतां । स्वामिमित्रेण कदाचिन्निर्दयं वाहितौ स्वामि प्राप्तजिनधर्मौ धर्मध्यानात्स्वर्गं जग्मतुस्ताभ्यामिव जीवेनापि ॥ ६ ॥

काळ, जीव अने संसार ए त्रण आदि अने अंत रहित छे, परंतु निरंतर सर्व योनिने विषे भमता एवा जीवे बे घडी मात्र पण कांइ हित मेळव्युं नहीं; पण जो जेम समुद्रमां मोतीनी छीपने क्यारेक दैवयोगे मोती बनावनार पाणी मळी जाय छे, तेम जीवने ए पुण्यरूप हित प्राप्त थइ गयुं, तो तेणे ते पकडी राखीने कंबल अने शंबल नामना बळदनी पेठे मोक्ष लक्ष्मीने अर्थे धारण कर्युं.॥६॥

हवे बे काव्ये करीने नृभवद्वार कहे छे.

क्षेत्रे नामलवालुके च लवणाकीर्णे च रोहेद्यथा,
बीजं किंचिदिहाखिले च फलति क्षात्रे च नानाफलैः॥
देवे नैरयिके तिरश्चि मनुजे श्रेयःप्रसूतिस्तथा,
तस्मान्मेघकुमारवन्नरभवेऽनंतश्रिये त्वर्यताम् ॥७॥

॥ क्षेत्रे नेति॥ यथा अमलवालुकेऽमला वालुका यस्मिन् तत्तस्मिन् निर्मलवालुकायुक्ते क्षेत्रे बीजं न रोहेन्नप्रादुर्भवेत् । च पुनः लवणा कीर्णे लवणेनाकीर्णं लवणाकीर्णं तस्मिन् क्षारयुक्ते क्षेत्रेऽपि बीजं न रोहेद्खिलेऽकृष्टे क्षेत्रे किंचिद्बीजं रोहेत् । च पुनः क्षात्रे कृष्टे क्षेत्रे ना नाफलैर्बीजं फलति ॥ तथा देवे सुरभवे नैरयिके नरकगतौ तिरश्चि पशुयोनौ मनुजे मनुष्यभवे श्रेयसःप्रसूतिः श्रेयःप्रसूतिर्धर्मोत्पत्तिः स्यात् ॥ तस्माद्धेतोर्मेघकुमारवत् गृहीतव्रतश्रेणिकसुतवन्नरभवेऽनं तश्रिये मोक्षश्रिये श्रेयःप्रसूतिर्त्वर्यतां शीघ्रं क्रियतां जीवैरिति शेषः ७

जेम आ लोकने विषे बीज निर्मळ रेतीवाला खेतरमां उगतुं नथी; खारवाला खेतरने विषे उगतुं नथी; नहिं खेडेला खेतरमां कांइक उगे छे अने खेडेला खेतरने विषे तो नाना प्रकारना फलोय करीने फले छे. तेथी रीते देवना, नारकीना तिर्यंचना अने मनुष्यना भवने विषे धर्मनी उत्पत्ति जाणवी. माटे हे जनो! तमे आ मनुष्य भवने विषे मेघकुमारनी पेठे मोक्ष लक्ष्मीने अर्थे उतावळ करो.॥७॥

( मंदाक्रांतावृत्तम्. )

वेलाकूले महति नृभवे प्राक्प्रसन्नेंदुवत्त–
ज्जिवा मूढश्लथदृढधियः क्रीणते कर्मवस्तु ॥
क्रूरा गुप्तिः कुगतियुगलीवर्णकः स्वर्दुरंतो,
येनांते स्याच्छिवपुरमुरुस्फूर्त्ति तेषां क्रमेण ॥८॥

॥ वेलाकुल इति ॥ जीवाः प्राणिनः कर्मवस्तु कर्म एव वस्तु कर्मवस्तु तत् क्रीणते उपार्जयंति । कथंभूता जीवाः ॥ मूढश्लथदृढधियः संतः । मूढाश्च श्लथाश्चदृढधियश्च मूढश्लथदृढधियः वा मूढा श्लथा दृढा धीर्येषांते । कर्मवस्तु क्व क्रीणते ॥ नृभवे मनुष्यभवे । कथंभूते नृभवे । वेलाकुले महति सुविस्तीर्णे ॥ किंवत् । प्रसन्नेंदुवत् । प्रसन्नचंद्रराजवत् ॥ तेषां मूढश्लथदृढधियां जीवानां क्रमेणेति। मूढधियां जीवानां कुगतियुगलीवर्णकः एवं क्रूरागुप्तिर्गोनिग्रहं । श्लथधियां च स्वः स्वर्गो दुरंतो भवेत् । दृढधियां चांते शिवपुरं मोक्षपुरं स्यात् ॥ येन कारणभूतेन वस्तुनेति सर्वत्र योज्यम् ॥ किंभूतं शिवपुरं । उरुःस्फूर्तिर्यस्मितदुरुस्फूर्ति महत्प्रकाशमित्यर्थः॥८॥

समुद्र समान विस्तीर्ण एवा नरभवने विषे मूढ, शिथिल अने

दढ बुद्धिवाला एम त्रण प्रकारना प्राणीओ, पूर्वे थइ गयेला प्रसंन चंद्रराजर्षिनी पेठे तेते कर्मरूप वस्तुने खरीद करे छे के, जे कर्मरूप वस्तुथी तेओ त्रणे अनुक्रमे नरक-तिर्यक रूप बे दुर्गतिनो वर्ण छे जेमां एवी दुःखरूप गति (१) दुःखथी पण स्वर्ग न पामवा रूप गति (२) अने अत्यंत प्रकाशमय मोक्ष गति (३) प्राप्त करेछे. ॥८॥

हवे बे काव्ये करीने सत्कुलद्वार कहे छे.

( इन्द्रवजावृत्तम्. )

तत्तादृशाभव्यपितुः सुतोऽपि,
धर्मालसो यः सुलसोऽभवन्न ।
स किं विषाहेर्विषहृन्मणिस्त–
त्पंकान्न वा श्रीसदनं सरोजम् ॥ ९ ॥

तत्तादृशेति ॥ यः सुलसो धर्मालसः पुण्यालस्ययुक्तो नाभवन्न बभूव ॥ किंलक्षणः सुलसः । तत्तादृशो महापापकारी अभव्यः संसारी अमोक्षगामी एवंविधः पिता कालिकसौरीकस्तस्य सुतोऽपि तदंगजोऽपि ॥ दृष्टांतमाह ॥ सः विषयहृद्विषविनाशी मणिर्विषाहेर्विष सर्पात् किं न स्यादपि तु स्यादेव । वा पुनस्तत्प्रसिद्धं श्रीसदनं लक्ष्मीस्थानं सरोजं कमलं पंकात् कर्दमात् किं नस्यादपि तु स्यादेव ॥ ९ ॥

जे सुलस नामनो पुरुष एक अभव्य पितानो पुत्र होवा छता पण धर्मने विषे आलसवालो थयो नथी. दृष्टांत कहे छे के, विषवाला सर्पथी विषने हरनारुं मणि शुं नथी उत्पन्न थतुं ? अथवा

तो काव्यमांथी लक्ष्मीनुं गृह थवुं कमल शुं नथी उत्पन्न थतुं ? अर्थात् थाय छे. ॥ ९ ॥

बोधाय सद्धर्मकुलोद्भवाः स्त्रियो-
ऽप्युदायनस्येव पुरा प्रभावती ॥
सत्तीर्थता किं जलधेर्न गंगया,
सद्वृत्तता वा शशिनो न राकया ॥ १० ॥

बोधायेति ॥ स्त्रियोऽपि बोधाय स्युः ॥ कथंभूताः स्त्रियः । सद्धर्मः प्रधानधर्मस्तेनमहितं कुलं तत्रोद्भव उत्पत्तिर्यासांताः सद्धर्मकुलोद्भवाः । केव । प्रभावतीव । यथा सा पुरा पूर्वमुदायनस्य राज्ञो बोधाय बभूव तथा । दृष्टांतमाह । जलधेः समुद्रस्य गंगया जाह्नव्या कृत्वा सत्तीर्थता पूज्यता किंनस्यादपितु स्यादेव । वा पुनः शशिनश्चंद्रमसो राकया पूर्णमासीरात्र्या सद्वृत्तता सुष्ठुवर्तुलता किं न स्यादपि तु स्यादेव ॥ १० ॥

पूर्वे थइ गयेला उदायन राजानी राणी प्रभावतीनी पेठे, सद्धर्मवाला कुलने विषे उत्पन्न थयेली स्त्रीयो पण बोधने अर्थे थाय छे. अर्थात् बोधनुं कारण थाय छे. दृष्टांत कहे छे के, समुद्रनुं उत्तम तीर्थपणुं गंगावडे शुं नथी थतुं ? अथवा तो चंद्रमानुं गोलाकारपणुं पूनमवडे शुं नथी बनतुं ? अर्थात् गंगाथी समुद्रमां तीर्थपणुं अने पूनमथी चंद्रमाने विषे गोलाकारपणुं थाय छे. ॥ १० ॥

हवे बे काव्यथी साधुसंग द्वार कहे छे.

( वसंततिलकावृत्तम्. )

जीवादितत्त्वविकलैर्विपुलैस्तपोभि-

मुक्तो न तामलिरजातसुसाधुसंगः ॥
कः स्वर्णसिद्धिमधिगच्छति कूटकल्पैः,
कोवांबुधिं तरति जर्जरयानपात्रैः ॥ ११ ॥

जीवादीति ॥ तामलिस्तामलिनामा ऋषिस्तपोभिर्मुक्तो न सिद्धो न जातः॥ किंविशिष्टैस्तपोभिः ॥ जीवादितत्त्वविकलैः जीव आदिर्येषु तानि जीवादिनि तत्वानि तैर्विकलानि रहितानि तैः ॥ किंभूतस्तामलिः । अजातः सुसाधुसंगो यस्य सः अनुत्पन्नसुविहितसंगमः । दृष्टांतमाह । कूटकल्पैर्मिथ्योपधैः स्वर्णसिद्धिं कोऽधिगच्छति ? अपि तु न कोऽपि प्राप्नोति । जर्जरयानपात्रैर्जीर्णप्रवहणैरंबुधिं समुद्रं कस्तरति ? अपि तु न कोऽपि ॥ ११ ॥

उत्तम सुगुरुना संग रहित तामलि तापस जीवादि तत्त्वे रहित एवा महा तपथी पण मुक्ति पाम्यो नहीं. दृष्टांत कहे छे के, खोटा औषधी प्रयोगथी कोने सुवर्णसिद्धि प्राप्त थाय ? अने जीर्ण वहाणथी कोण समुद्र तरी शके ? ॥ ११ ॥

( औपच्छंदसिकवृत्तम्. )

गिरिपुष्पशुकाविवामलांगी,
गुणनाशोदयभाग् जडज्ञसंगात् ॥
जलदांबु विषं सुधा च न स्यात्,
कनकाद्रौ च किमिक्षुकानने च ॥ १२ ॥

गिरिपुष्पेति ॥ अमलोंगी निर्मलः प्राणी जडज्ञसंगात् जड-श्चज्ञश्च जडज्ञौ तयोः संगस्तस्मात् मूर्खपंडितसंयोगात् गुणनाशो दयभाग् गुणानामुदयवान् भवति गुणानां हानिवानपि स्यात् ॥ एतावता जडसंयोगात् प्राणी विद्यमानानापि गुणान् मुंचति पं-डितसंसर्गाच्च असतोऽपि दाक्षिण्यादीन् गुणानाश्रयति ॥ किंव-त् ॥ गिरिपुष्पशुकाविव गिरिशुकपुष्पशुकनामानौ पक्षिणाविव ॥ यथागिरिशुको भिल्लशुको जडानां भिल्लानां संसर्गान्निर्गुणो जा-तस्तथाच पुष्पशुकस्तापसशुकः पंडितानां तापसानां संपर्कान्निर्गु-णोऽपि गुणी जातः ॥ तथाचोक्तं ॥ माताप्येका पिताप्येको, मम तस्य च पक्षिणः ॥ अहं मुनिभिरानितः, स च नीतो गवाशिभिः ॥ १ ॥ गवाशनानां स गिरः श्रृणोति, अहं तु राजन् मुनिपुंग-वानाम् ॥ प्रत्यक्षमेतद्भवता च दृष्टं, संसर्गजा दोषगुणा भवंति ॥२॥ लौकिक दृष्टांतमाह ॥ जलदांबु मेघजलं कनकद्रौ धत्तुरके वृक्षे सद्विषं किं न स्यादिक्षुवने पतितममृतं किं न स्यादपि तु स्यादमृतमेव॥१२॥

निर्मल प्राणी गिरिशुक अने पुष्पशुक नामना बे पोपटनी पेठे मूर्ख अने ज्ञानीनी संगतिथी अनुक्रमे निर्गुणी अने सद्‌गुणी थाय छे. दृष्टांत कहे छे के, मेघनुं जल धंतुराना वृक्षने विषे विष अने शेरडीना वनने विषे अमृत शुं थतुं नथी ? अर्थात् थाय छे. ॥ १२ ॥

हवे बे काव्ये करीने बोधद्वार कहे छे.

( वसंततिलकावृत्तम्. )

प्राप्याल्पमप्यमलबोधवचाश्चिलातीं–

पुत्रो यथाघमलिनोऽपि विभर्त्ति शुद्धिम् ॥
किं कोटिवेधिरसचंदनरत्नबिंदु-
स्पर्शोऽपि हेमशिशिरं च न तप्तलोहम् ॥ १४ ॥

प्राप्येति ॥ अघं पापं तेन मलिनः प्राणी अल्पमपि स्तोकमपि अमलबोधवचः अमलो निर्मलो बोधो यस्मिन् तदमलबोधं तथा तद्वचनंच तत् लब्ध्वा शुद्धिं नैर्मल्यं धत्ते ॥ क इव । चिलातीपुत्र इव । यथा चिलातीपुत्रः पापीयान् मुनेरुपदेशं लब्ध्वा शुद्धिं नैर्मल्यं निःपापतां बभार दधार ॥ दृष्टांतमाह ॥ तप्तलोहं अग्निना संतप्तं लोहं हेम सुवर्णरूपं शिशिरं शीतलं च किं न भवति ! अपि तु भवत्येव ॥ क सति ॥ कोटिप्रमाणं लोहं विध्यतीति सुवर्णं करोतीति कोटिवेधी एवं विधो रसो यस्यसः कोटिविधिरसः एवं विधं चंदनरत्नं गोशीर्षचंदनं तस्य बिंदुस्तस्य स्पर्शोऽपि ॥ १४ ॥

पापथी मलीन थयाय पण चिलाती पुत्रे अल्प पण निर्मल ए-या बोधकारि वचन सांभली निर्मलपणुं धारण कर्युं. दृष्टांत कहे छे के, तपावेलुं लोढुं कोटिवेधीरस ( क्रोडो मण लोढाने सुवर्ण ब-नावनार रस ) रुप गोशीर्ष चंदनरत्नना टीपाना स्पर्शथी शुं शीतल सुवर्ण नथी थतुं ? अर्थात् थाय छे. ॥ १४ ॥

द्वेषेऽपि बोधकवचःश्रवणं विधाय,
स्याद्रौहिणेय इव जंतुरुदारलाभः ॥
क्राथोऽप्रियोऽपि सरुजां सुखदो रविर्वा,
संतापकोऽपि जगदंगभृतां हिताय ॥ १५ ॥

द्वेषेऽपीति ॥ जंतुः प्राणी द्वेषेऽपि बोधकवचःश्रवणं बोधकारी वचनाकर्णनं कर्णाभ्यां विधाय कृत्वा रौहिणेयश्चौर इव उदारलाभो भवति ॥ लौकिक दृष्टांतेनैतदेव दृढयति ॥ क्वाथोऽप्रियोऽपि कटुकोऽपि सरुजां सव्याधीनां रोगिणां नराणां सुखदः सुखदाता नीरोगताकारी स्यात् । वा पुनर्द्वितीय दृष्टांते । रविः सूर्यः संतापकोऽपि जगदंगभूतां भूलोकप्राणिनां हिताय हर्षाय भवति ॥ १९ ॥

अरुचि छतां पण बोधकारी वचन सांभलवाथी प्राणी, रौहिणेय चोरनी पेठे अत्यंत लाभ संपादन करे छे. अहिं दृष्टांत कहे छे के, अप्रिय ( कडवो ) क्वाथ पण व्याध रोगी माणसने सुखकारी छे अने ताप आपनारो पण सूर्य जगतना प्राणीयोने हितकारी छे. ॥१९॥

हवे बे काव्यथी सम्यक्त्व द्वार कहे छे.

कोऽप्यन्य एव महिमा ननु शुद्धदृष्टे-
र्यच्छ्रेणिको ह्यविरतोऽपि जिनोऽत्र भावी ॥
पुण्यार्गलः किमितरोऽपि न सार्वभौमो,
रूपच्युतोऽप्यधिगुणास्त्रिजगन्नतश्च ॥ २० ॥

कोऽप्यन्येति ॥ शुद्धदृष्टेः शुद्धा दृष्टिर्यस्य सस्तस्य निर्मलसम्यक्तस्य नरस्य ननु निश्चितं कोऽपि अन्यैव महिमा प्रभावः स्यात् ॥ यद्यस्माच्छ्रेणिको नाम भूपतिरविरतोऽपि विरतिरहितोऽप्यत्र भरतक्षेत्रे जिनः पद्मनाभनामा तीर्थंकरो भावी भविष्यति ॥ एतावता श्रेणिकराजा सम्यक्तेनैव तीर्थंकरनामगोत्रमुपार्जयामास ॥ दृष्टांतमाह ॥ इतरोऽपि सामान्योऽपि जनः पुण्यार्गलः पुण्याधिकः

सन् किं सार्वभौम समस्तपृथ्वीसाम्राज्यसहितो न स्यादपि तु सा र्वभौमो भवति। रूपच्युतो रूपरहितोऽप्यधिगुणोऽधिकगुणवान् पुरुषस्त्रिजगता त्रैलोक्येन नतो नमस्कृतः किं न स्यादपि तु स्यादेव ॥ १६ ॥

निश्चे सम्यक्त्वंत प्राणीनो कोइ विलक्षण प्रभाव होय छे. कारणके, अविरति ( विरति नहिं पामेलो ) एवो पण श्रेणिक राजा आ भरतक्षेत्रने विषे तीर्थंकर थशे. दृष्टांत कहेछे के, सामान्य पर्याय पण कोइ महा पुण्यवंत पुरुष शुं सर्व पृथ्वीना राज्यने भोगवनारो न थाय ? अथवा तो रूपरहित पर्याय पण गुणवान् पुरुष शुं त्रण लोकने नमस्कार करवा योग्य नथी थतो ? अर्थात् थाय छे. ॥ १६ ॥

तद्दर्शनं किमपि सा सुलसाप येन,
प्रादाज्जिनोऽपि महिमानममानमस्यै ॥
नैर्मल्यतः शशिकला न च केतकीत्वं,
मालातुलां च हरमूर्ध्नि बभार गंगा ॥ १७ ॥

तर्द्दशनमिति ॥ सा सुलसा तत् किमप्यपूर्वं दर्शनमाप लेभे । येन सम्यक्तदर्शनेन जिनोऽपि वीरोऽपि, अस्यै सुलसायै अमानं गरिष्ठं महिमानं माहात्म्यं आदात् ॥ एतावता वीरः सुलसाया व्याख्यानं सम्यक्तेनैव चकार। तत्प्रमाणं सम्यक्तस्यैवेत्यर्थः॥ दृष्टांतमाह॥ शशिकला चंद्रकला हरमूर्ध्नि शंकरमस्तके तिलकरूपत्वात् केतकीत्वं केतकीरूपतां न बभार न दधार ! अपि तु बभारैव । च

पुनर्हरमूर्ध्नि शंकरमस्तके गंगा मालातुलां मालारूपत्वं न बभार अपि तु बभारैव ॥ १७ ॥

ते सुलसा श्राविका कोइ पण अपूर्व एवा सम्यक्त्व दर्शनने पामी हती के, जे सम्यक्त्वने लीधे श्रीजिनराज एवा श्रीवीरप्रभुए पनी ( सुलसानी ) बहुज प्रशंसा करी.दृष्टांत कहेछे के;निर्मलपणाने लीधे शशिकलाये शंकरना मस्तक उपर तिलकपणाथी केतकीपणुं अने गंगाये पुष्पमालाना समानपणुं शुं धारण कर्युं नथी? अर्थात् धारण कर्युं छे. ॥ १७ ॥

हवे बे काव्यथी देवद्वार कहेछे.

दूरेऽर्हतोऽस्तु महनादि नतीच्छयाऽपि,
श्रेयःसुरोऽजनि न सेडुकदर्दुरः किम् ॥
कल्पद्रुमः स्मरणतोऽपि न किं फलाय,
पार्श्वेऽपि वा मृगमदो न हि सौरभाय ॥ १७॥

दूर इति॥ अर्हतो जिनस्य महनादि पूजादिकं दूरेऽस्तु ।नतीच्छयाऽपि नमस्कारकरणवांच्छयाऽपि सेडुकनामा ब्राह्मणजीवो दुर्दरःसन् श्रेयःसुरः प्रधानदेवः किं नाजनि नाभूदपि तु जात एव॥ दृष्टांतमाह ॥ कल्पवृक्षः स्मरणतोऽपि स्मरणमात्रेणापि किं फलाय न स्यादपि तु वाञ्छापुरकोऽपि भवत्येव ॥ द्वितीयदृष्टांतमाह ॥ मृगमदः कस्तूरिका पार्श्वेऽपि समीपेऽपि किं सौरभाय सौरभ्यकरणाय न स्यादपि तु परिमलाय भवत्येव ॥ १८ ॥

श्री अरिहंत प्रभुनुं पूजनादिक तो दूर रह्युं, परंतु तेमने नमस्कार करवानी इच्छाथी सेडुक नामना ब्राह्मणनो जीव के, जे दे-

इको थयो हतो, ते पण शुं उत्तम देवता नथी थयो ? दृष्टांत कहे छे के, कल्पवृक्ष फक्त स्मरण करवाथी शुं इष्टफल नथी आपतुं ? अथवा तो समीपे पडेली कस्तुरी शुं सुगंध नथी आपती ? अर्थात् आपे छे. ॥ १८ ॥

(इन्द्रवज्रावृत्तम्)

ध्यातः परोऽक्षेऽपि जिनस्त्रिशुद्धया,
जीर्णाभिधश्रेष्ठिवदिष्टसिद्धयै ॥
सिंधुप्रवृद्धयै कुमुदौघलक्ष्म्यै,
चकोरतुष्टयै विधुरभ्रगोऽपि ॥ १९ ॥

ध्यातरिति ॥ जिनः परोऽक्षेऽपि अप्रत्यक्षेऽपि ध्यातः स्मृतः सन् इष्टसिद्धये वांछितसिद्धये स्यात् ॥ कया ध्यातः ॥ त्रिशुद्धया त्रयाणां मनोवाक्कायानां शुद्धिर्नैर्मल्यं तया ॥ कस्येव ॥ जीर्णाभिधश्रेष्ठिन इव ॥ दृष्टांतमाह ॥ अभ्रग आकाशस्थो विधुश्चंद्रः सिंधुप्रवृद्धये समुद्रवृद्धये कुमुदानां कमलविशेषाणामोघस्य समूहस्य शोभायै च चकोराणां चकोरपक्षिणां हर्षाय च भवति ॥ १९ ॥

जिनेश्वर प्रभु प्रत्यक्ष न होय तोपण त्रिकरण शुद्धिवडे ध्यान करवाथी जेम जीर्ण शेठने आपी तेम सर्व माणसोने वांछित सिद्धि आपे छे. दृष्टांत कहे छे के, आकाशमां रहेलो पवोय पण चंद्र समुद्रनी वृद्धिने माटे, कमळना समूहनी शोभाने माटे अने चकोर पक्षीना हर्षने अर्थे थाय छे. ॥ १९ ॥

हवे बे काव्यथी गुरुद्वार कहे छे.

( वसंततिलकावृत्तम् )

नव्यो गुरुः सुरतरुर्विहितामितर्द्धि-
र्यत्केवलाय कवलार्थिषु गौतमोऽभूत् ॥
तापातुरेऽमृतरसः किमु शैत्यमेव,
नाप्रार्थितोऽपि वितरत्यजरामरत्वम् ॥ २० ॥

नव्यरिति ! गुरुर्नव्यो नवीनः सुरतरुः कल्पवृक्षः ॥ किंभूतः ॥ विहिता कृता अमिता अप्रमाणा ऋद्धिः श्रीर्येनसस्तथा ॥ यस्मात्कवलार्थिषु पारणार्थिषु तापसेषु कैवलाय केवलज्ञानाय गौतमः समभूत् ॥ एतावता वांछितादप्यधिकं दत्ते गुरुः । अतएव नवीनः कल्पद्रुः । कल्पद्रुमो वांछितं दत्ते नावांछितं दत्ते न वांछितादधिकं ॥ दृष्टांतमाह ॥ अप्रार्थितोऽपि अयाचितोऽपि अमृतरसः तापातुरे तापाक्रांते नरे किं शैत्यमेव वितरति करोति । किमु अजरामरत्वं न वितरति ? अपि तु वितरत्येव ॥ २० ॥

प्रमाण विनानी ऋद्धि आपनारा गुरु नवीन कल्पवृक्ष समान छे; कारण के, गौतम ऋषि कवलनी 'अन्ननी' याचना करनारा (तापसो) ने केवलज्ञानने अर्थे थया. दृष्टांत कहे छे के, प्रार्थना नहि करेलो एवोय पण अमृतरस, तापथी आकुल थयेलाने फक्त शीतलताज आपे छे, शुं अजरामरपणुं नथी आपतो ? ॥ २० ॥

( पृथ्वीवृत्तम्. )

कुबोधमतयोऽभितः कुगुरवो जमाल्यादिवत्,
पुनः क्वचन वज्रवत्सुगुरवोऽमला जन्मतः ॥

टको थयो हतो, ते पण शुं उत्तम देवता नथी थयो ? दृष्टांत कहे छे के, कल्पवृक्ष फक्त स्मरण करवाथी शुं इष्टफल नथी आपतुं ? अथवा तो समीपे पडेली कस्तुरी शुं सुगंध नथी आपती ? अर्थात् आपे छे. ॥ १८ ॥

(इन्द्रवज्राट्टत्तम्)

ध्यातः परोऽक्षेऽपि जिनस्त्रिशुद्ध्या,
जीर्णाभिधश्रेष्टिवदिष्टसिद्ध्यै ॥
सिंधुप्रवृद्ध्यै कुमुदोघलक्ष्म्यै,
चकोरतुष्ट्यै विधुरभ्रगोऽपि ॥ १९ ॥

ध्यातरिति ॥ जिनः परोऽक्षेऽपि अप्रत्यक्षेऽपि ध्यातः स्मृतः सन् इष्टसिद्धये वांछितार्थसिद्धये स्यात् ॥ कया ध्यातः ॥ त्रिशुद्ध्या त्रयाणां मनोवाक्कायानां शुद्धिर्नैर्मल्यं तया ॥ कस्येव ॥ जीर्णाभिधश्रेष्टिन इव ॥ दृष्टांतमाह ॥ अभ्रग आकाशस्थो विधुश्चंद्रः सिंधुप्रवृद्धये समुद्रवृद्धये कुमुदानां कमलविशेषाणामोघस्य समूहस्य शोभायै च चकोराणां चकोरपक्षिणां हर्षाय च भवति ॥ १९ ॥

जिनेश्वर प्रभु प्रत्यक्ष न होय तोपण त्रिकरण शुद्धियवडे ध्यान करवाथी जेम जीर्ण शेठने आप्यां तेम सर्व माणसोने वांछित सिद्धि आपे छे. दृष्टांत कहे छे के, आकाशमां रहेलो पवोय पण चंद्र समुद्रनी वृद्धिने माटे, कमलना समूहनी शोभाने माटे अने चकोर पक्षीना हर्षने अर्थे थाय छे. ॥ १९ ॥

हवे बे काव्यथी गुरुद्वार कहे छे.

( वसंततिलकावृत्तम् )

नव्यो गुरुः सुरतरुर्विहितामितर्द्धि-
र्यत्केवलाय कवलार्थिषु गौतमोऽभूत् ॥
तापातुरेऽमृतरसः किमु शैत्यमेव,
नाप्रार्थितोऽपि वितरत्यजरामरत्वम् ॥ २० ॥

नव्यरिति ! गुरुर्नव्यो नवीनः सुरतरुः कल्पवृक्षः ॥ किंभूतः ॥ विहिता कृता अमिता अप्रमाणा ऋद्धिः श्रीर्येनसस्तथा ॥ यस्मात्कवलार्थिषु पारणार्थिषु तापसेषु केवलाय केवलज्ञानाय गौतमः समभूत् ॥ एतावता वांछिताद्प्यधिकं दत्ते गुरुः । अतएव नवीनः कल्पद्रुः । कल्पद्रुमो वांछितं दत्ते नावांछितं दत्ते न वांछितादधिकं ॥ दृष्टांतमाह ॥ अप्रार्थितोऽपि अयाचितोऽपि अमृतरसः तापातुरे तापाक्रांते नरे किं शैत्यमेव वितरति करोति । किमु अजरामरत्वं न वितरति ? अपि तु वितरत्येव ॥ २० ॥

प्रमाण विनानी ऋद्धि आपनारा गुरु नवीन कल्पवृक्ष समान छे; कारण के, गौतम ऋषि कवलनी 'अन्ननी' याचना करनारा (तापसो) ने केवलज्ञानने अर्थे थया. दृष्टांत कहे छे के, प्रार्थना नहि करेलो एवोय पण अमृतरस, तापथी आकुल थयेलाने फक्त शीतलताज आपे छे, शुं अजरामरपणुं नथी आपतो ? ॥ २० ॥

( पृथ्वीवृत्तम्. )

कुबोधमतयोऽभितः कुगुरवो जमाल्यादिवत्,
पुनः क्वचन वज्रवत्सुगुरवोऽमला जन्मतः ॥

करीरपिचुमंदवन्न घनसारसच्चंदनाः,
घना न च खरोष्ट्रवज्जयतुरंगभद्रद्विपाः ॥ २१॥

कुबोधेति ॥ कुगुरवो जमाल्यादिवत् जमाल्यादिसदृशाः अभितः सामस्त्येन भवंति॥ किंभूताः ॥ कुबोधे कुत्सितज्ञाने मतिर्येषां ते तथा कुत्सितज्ञानवंत इत्यर्थः ॥ पुनः क्वचन क्वापिस्थाने वज्रवत् वज्रस्वामिसदृशाः सुगुरवः स्युः ॥ किंरूपाः ॥ जन्मतः जन्मन आरभ्यामला निःपापाः॥ दृष्टांतमाह॥ घनसारः कर्पूरः सच्चंदनाः श्रेष्ठगोशीर्षचंदनवृक्षाः घनाः प्रचुरा न भवंति ॥ किंवत् ॥ करीरपिचुमंदवत्॥ करीरनिंबवृक्षा यथा घना भवंति तथा कर्पूरचंदन वृक्षा घना न भवंति ॥ च पुनः खरोष्ट्रवत् ॥ यथा गर्दभक्रमेलका घना भवंति तथा जयतुरंगा उच्चैःश्रवाः भद्रद्विपा भद्रहस्तिनः स्तोका एव स्युः ॥ एतावता खरोष्ट्रवत् कुगुरवो बहवो जयतुरंगभद्र द्विपा इव सुगुरवोऽल्पा एव ॥ २१ ॥

जमालि विगेरेनी पेठे कुज्ञानने विषे बुद्धिवाला कुगुरुओ समीपे रहेला देखाय छे, अर्थात् बहु छे; परंतु वज्रस्वामीनी पेठे जन्मथी आरंभीने निर्मळ एवा सुगुरुओ कोइकज स्थानके जोवामां आवे छे. दृष्टांत कहे छे के, केरडा अने लींबडानी पेठे कपूर अने चंदनना उत्तम वृक्षो घणां होतां नथी, तेमज गधेडा अने उंटनी पेठे उच्चैःश्रवा अने भद्रजातिना हाथीओ पण घणां होतां नथी. ॥ २१ ॥

हवे बे काव्यथी धर्मद्वार कहे छे.

( इन्द्रवज्रावृत्तम्. )

विज्ञाय धन्या जिनधर्ममर्म,

रज्यंति शय्यंभववन्न जाड्ये ॥
पीत्वा सिताभावितधेनुदुग्धं,
को वाम्लतक्रार्कपयांसि पश्येत् ॥२१॥

विज्ञायेति ॥ धन्याः सुभाग्याः जिनधर्ममर्म विज्ञाय ज्ञात्वा जाड्ये मुर्खत्वे न रज्यंति न रागं कुर्वंति ॥ किंवत् ॥ शय्यंभववत् यथा शय्यंभवो ब्राह्मणः " अहोकष्टं तत्वं न ज्ञायते क्वचित् " इति साधुवचनं श्रुत्वा गुरोस्तत्वमापृछ्य मिथ्यात्वाद्यागादेर्विरक्तः सन् प्रव्रज्यां गृहित्वा संप्राप्तोभयशिक्षः सय्यंभवनामा आचार्योऽभूत् ॥ दृष्टांतमाह ॥ सिता शर्करा तया भावितं मिश्रितं धेनुदुग्धं पीत्वा आसाद्य को वा क इव पुरुषः आम्लतक्रं अर्कपयांसि अर्कदुग्धानि पश्येत् विलोकयेत् । अपि तु न कोऽपि गवेषयेत् ॥ २१ ॥

धन्य पुरुषो जिनधर्मना मर्मने जाणीने शय्यंभवनी पेठे मूढताने विषे राग करता नथी. दृष्टांत कहे छे के, साकरथी मिश्रित एवा गायना दूधने पीधा पछी कयो पुरुष खाटी छाश अथवा आकडाना दुध सामु जूए ? अर्थात् कोइ न जूए. ॥ २२ ॥

लब्धे जडः कोऽपि हितेऽपि धर्मे,
स्तौत्यक्षसौख्यानि शशीव राजा ॥
न पंकजं भेक उपैति पंकं,
क्रमेलको नाम्रमियर्त्ति निंबम् ॥ २२ ॥

लब्ध इति ॥ कोऽपि जडः हितेऽपि हितकारिण्यपि धर्मे लब्धे प्राप्ते सति अक्षसौख्यानि इन्द्रियसुखानि स्तौति वर्णयति ॥ क इव ॥

शशीराजेव ॥ यथा शशी राजा जिनधर्मे प्राप्तेऽपि इंद्रियसुखार्थी बभूव ॥ तद्वत्सोऽपि जडएव ॥ दृष्टांतमाह ॥ भेको दर्दुरो पंकजं कमलं नोपैति न याति किंतु पंकं कर्दमं याति॥ क्रमेलक उष्ट्रः आम्रं नैयाति न याति परं निंबं याति । नीचो नीचस्थानं यातीत्यर्थः॥२२॥

हितकारक एवा धर्म प्राप्त करया छता कोइकज मूर्ख पुरुष शशी राजानी पेठे इंद्रिभोना सुखने चलाणे छे. दृष्टांत कहे छे के, देडको, कमल प्रत्ये न जता कादव प्रत्ये जाय छे अने उंट आंबा समीपे न जता लींबडा पासे जाय छे. अर्थात् नीच पुरुष नीच स्थानके जाय छे. ॥ २२ ॥

हवे ये काव्यथी शक्तिद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम् )

अष्टाब्दोऽपि तथाविधव्रततपःस्वाध्यायकृत्यासहो-
प्युच्चैर्ध्यानवलेन कर्मरिपुभिर्मुक्तोऽतिमुक्तो मुनिः ॥
शक्त्या गच्छत तन्न किं हितपथं मुक्त्वा प्रमादोत्तरं ।
श्रूयंते च मदालसातनुभुवो बाल्येऽपि योगोज्वलाः॥२३॥

अष्टाब्दोऽपीति ॥ अष्टाब्दोऽपि अष्टवार्षिकोऽपि तथाविधानां तादृशानां दुष्कराणां व्रतानामहिंसादीनां तपसां द्वादशविधानां स्वाध्यायानां च कृत्येषु करणीयविधिषु असहोऽसमर्थो लघुत्वात्॥ एवं विधोऽपि उच्चैर्ध्यानवलेन कर्मरिपुभिर्मुक्तो रहितो बभूव ॥कः॥ अतिमुक्तकऋषिस्तस्मात् कारणात् शक्त्या अंतरंगमनोबलेन हितपथं धर्ममार्गं किं न गच्छत ॥ किंकृत्वा ॥ प्रमाद एवोत्तरं उत्कटा-

लस्यं मुक्त्वा ॥ दृष्टांतमाह ॥ मदालसापुत्रा बाल्येऽपि योगोज्वला ध्याननिर्मलाः श्रूयंते आकर्ण्यंते ॥ २३ ॥

आद्य वर्यनी वयना अने तेवी बाल्यावस्थाने लीधेज ते ते प्रकारना अहिंसादि व्रत, मासक्षपणादि तप अने स्वाध्याय करवाने असक्त एवा अतिमुक्त मुनि पोताना उत्कृष्ट एवा ध्यान बलवडे कर्मरूपी शत्रुथी मुक्त थया. माटे हे भव्यजनो ! तमे महा प्रमादने स्वर्जी शाकिये करीने हितकारी एवा मार्ग प्रत्ये केम जता नथी? कारण के, मदालसाना पुत्रो बाल्यावस्थाने विषे पण ध्यानमां निर्मल थयेला संभलाय छे. ॥ २३ ॥

( वसंततिलकावृत्तम्. )

शीलं तपश्च बलदेवमुनिश्चरित्वा,
दानं प्रदाय रथकृत्त्रितयेऽप्यशक्तः ॥
एणो मुदा तदनुमोदनया सुरोऽभू-
द्योगाद्धि सिद्धिमगमच्चतुरंगितांहिः ॥ २४ ॥

शीलमिति ॥ बलदेवमुनिर्बलदेवः कृष्णस्य वृद्धभ्राता शीलं तपश्च चरित्वा आचर्य रथकृद्रथकारकश्च बलदेवमुनये इति शेषः दानं प्रदाय दत्वा सुरोऽभूत् देवोजातः । एणो मृगो मुदा हर्षेण तदनुमोदनया तस्य अनुमोदना तदनुमोदना तया बलदेवशील तपःकरणस्यानुमोदनया रथकारकदानप्रदानानुमोदनया च देवोऽभूत् । कथंभूतः एणः ? त्रितये शीलतपोदानेऽपि अशक्तः असमर्थः । दृष्टांतमाह । हि यस्माच्चतुरंगितांहिश्चतुरंगपादपरुषो

योगात् समाधेर्बलात् सिद्धिमगमत् सिद्धिं जगाम ॥ २४ ॥

कृष्णना म्होटाभाइ बलदेवमुनि शील अने तपनुं आचरण क-री देवता थया, रथकार (सुथार) दान आपीने देवपदवि पाम्यो अने हरिण शील, तप अने दानमां असमर्थ छता तेओनो अनुमोदनाथी देवता थयो. उपर कहेलुं सर्व योग्य छे. कारण के, चतुरंगी पुरुष समाधिना बलथी सिद्धिपदने पाम्यो छे. ॥ २४ ॥

हव बे काव्यथी शमद्वार कहे छे.

(उपेंद्रवज्रावृत्तम्)

शमेन सिद्ध्यंति मतानि कृष्णा-
नुजर्षिवत्तीव्रतपोऽस्तु वा मा ॥
दिनाधिनाथेन कृतेऽन्नपाके,
संधुक्षणं कः कुरुतेऽनलस्य ॥ २५ ॥

शमेनेति ॥ शमेन क्षमया मतानि वांछितानि सिद्ध्यंति सिद्धिं यांति । तीव्र तपोऽस्तु भवतु वाऽथवा मा भवतु तपोविनैव शमेन मनोवांछितानि सिद्ध्यंतीत्यर्थः । किंवत् । कृष्णानुजर्षिवत् । कृष्ण महाराजलघुभ्राता गजसुकुमालस्तस्येव । यथा गजसुकुमालः तपोविनैव श्वसुरदत्ताग्निकष्टं सहमानः शमेनैव सिद्ध्यतिस्म । दृष्टांतमाह । दिनाधिनाथेन सूर्येण अन्नपाके धान्यपचने कृते सति कःपूमाननलस्याग्नेः संधुक्षणं कुरुते ? न कोपीत्यर्थः ॥ २५ ॥

तीव्र तपश्चर्या करो अथवा न करो; परंतु मननी अभिलाषाओ तो कृष्ण महाराजना नाना भाई गजसुकुमालनी पेठे शमताथीज

सिद्ध थाय छे. दृष्टांत कहे छे के, सूर्यथी अग्र पाके छते कयो पुरुष अग्निने सळगावे? अर्थात् कोइ न सळगावे. ॥ २५ ॥

( वसंततिलकावृत्तम् )

प्रीत्यै शमी स्वपरयोरपि चंडरुद्र–
शिष्यो यथात्मनि गुरावपि केवलर्द्धया ॥
सत्सार्थसंगतिमवाप्य विशाखनामा,
चौरोऽप्यभूद्विलसदुज्वलदिव्यशक्तिः ॥२६॥

प्रीत्याइति ॥ शमी क्षमावान्नरः स्वपरयोरपि आत्मनः परस्यापि च प्रीत्यै हर्षाय भवति । कइव । चंडरुद्रशिष्य इव । यथा चंडरुद्रशिष्य आत्मनि गुरावपि चंडरुद्रनामनि आचार्येऽपि केवलर्द्धया केवलज्ञानेन प्रीतये बभूव । दृष्टांतमाह ॥ विशाखनामा चौरः सत्सार्थसंगतिं चिरप्रशेखंडितसंयोगं प्राप्य विलसदुज्वलदिव्यशक्तिर्यस्य ॥ तथा एवंविधोऽभूत् ॥ २६ ॥

जेम शमतावालो चंडरुद्राचार्यनो शिष्य, केवल ज्ञानना समृद्धिये करीने पोताने विषे तथा गुरुने विषे प्रीतिवालो थयो. तेम बीजो शमतावालो प्राणी पण पोताने तथा परने विषे प्रीतिवालो थाय छे. दृष्टांत कहे छे के, विशाख नामनो चोर पण सत्सार्थना संगने पामीने प्रकाशित उज्वल दिव्य शक्तिवालो थयो. ॥ २६ ॥

हवे बे काव्ये करीने यतिद्वार कहे छे.

( मालिनीवृत्तम् )

व्रतमपि यदुदीर्णं सातिचारं कुगत्यै,

दिनमपि शुचि मुक्त्यै कुंडरीकादिवत्तत् ॥
अहह दहति चित्रावारिपूरोऽपि शस्यं ।
भृशमपि कृशपाथः स्वातिजं पाति जंतून् ॥२७॥

व्रतमपीति। व्रतमपि बहुकालचीर्णं कृतं सत् सातिचारं अतिचारसहितं कुगत्यै नरकाय भवति। तद्व्रतं शुचि निर्मलं दिनमपि एकदिनमपि पालितं सत् मुक्त्यै सिद्धये स्यात् । किंवत् । कुंडरिकादिवत् । कुंडरिक पुंडरिकवत् । यथा कुंडरिकस्य बहुकालं चीर्णमपि सातिचारं मद्व्रतं नरकायाऽभूत् । पुंडरिकस्य चैकदिनमपि पालितं व्रतं निर्मलं सत् मुक्त्यै बभूव । तथाऽन्यस्यापि। दृष्टांतमाह । अहह इति खेदे चित्रानक्षत्रवारिपूरोऽपि शस्यं धान्यं दहति भस्मी करोति । भृशमपि अत्यर्थमपि कृशपाथः स्तोकजलं स्वातिजं स्वातिनक्षत्रोत्पन्नं सत् जंतून् प्राणिनः पाति पालयति रक्षतीत्यर्थः ॥२७॥

चिरकाल पर्यंत पण अतिचार युक्त पालेलुं व्रत कुगतिने अर्थे थाय छे अने तेज व्रत एक दिवस पण निरतिचारपणे पाळ्युं होय तो पुंडरिकादिकनी पेठे मुक्तिदाता थाय छे. ते उपर दृष्टांत कहे छे. ए खेदनी वात छे के, चित्रा नक्षत्रमां वरसेलो बहु मेघ पण धान्यने बाळी नाखे छे अने स्वाति नक्षत्रमां वरसेलो अल्पमेघ सर्व प्राणीओनुं रक्षण करे छे. ॥ २७ ॥

(पृथ्वीवृत्तम्)

व्रतेन शुचिनापि किं किमथ सद्गुरुपासनै–
रुदायिनृपमारकश्रमणवत्सपापात्मनः ॥

शिरस्थविषहृन्मणिः फणिगणः किमानंदनः,
स चंदनवनस्थितः किमथवा जगत्तापहृत् ॥२८॥

व्रतेनेति । सपापः पापान्वित आत्मा जीवो यस्य स सपापात्मा तस्य पापपुरुषस्य शुचिनापि निर्मलेनापि व्रतेन किं । अथवा सद्गुरूपासनैः सुगुरुसेवाभिरपि किं नकिंचित्फलमित्यर्थः । किंवत् । उदायिनृपमारकश्रमणवत् । यथा उदायिराजा कौणिकपुत्रस्तस्य मारको विनाशकारी श्रमणो मुनिस्तस्य निर्मलेनापि व्रतेन फलं किमपि न जातं । दृष्टांतमाह । शिरस्थो मस्तके वर्त्तमानो विषहृत् विषापहारी मणिर्यस्य स तथा एवं विधोऽपि फणिगणः सर्पसमूहः किमानंदनः किं हर्षकारी स्यादपि तु न प्रत्युत विध्वंसको भवति । अथवा स सर्पसमूहः चंदनवनस्थितः चंदनवनचेष्टनकारकोऽपि जगत्तापहृत् जगत्तापहारी विश्वसंतापनिवारकः किं स्यादपि तु न॥

उदायि राजाने मारनार साधुनी पेठे पापयुक्त छे मन जेनुं एवा पुरुषने पवित्र व्रते करीने शुं ? अथवा तो सद्गुरुनी उपासना वडे करीने पण शुं ? अर्थात् कांइ नहीं. दृष्टांत कहे छे के, मस्तक उपर विषापहारी मणिने धारण करनारो सर्पसमूह शुं आनंद आपनारो छे ? अथवा तो चंदनना वनने विषे क्रीडा करनारो तेज सर्पसमूह शुं जगत्ना तापने दूर करनारो छे ? अर्थात् नथी. ॥ २८ ॥

हवे त्रण काव्ये करीने श्रावकद्वारा कहेछे.

( स्रग्धरावृत्तम् )

साधोरन्हाय सिद्धिः सचरणकरणैः श्रावकस्यापि हि स्या

न्मध्येऽष्टानां भवानां शशिविपदगुणानंदना नंदवृत्तैः ॥
चेन्नौभिः शीघ्रगाभिर्जलधिजलपथैस्तीरदेशेषु पांथाः ।
केचिद्यात्याशु नान्ये हयकरभरथैर्भूपथैः किं क्रमेण ॥२९॥

साधोरन्हायेति ॥ साधोर्मुनिराजस्य सुचरणकरणैः सुष्टुचारित्रविधिविशेषैरन्हाय शीघ्रं सिद्धिर्मोक्षः स्यात् हि निश्चितं । अष्टानां भवानां मध्ये श्रावकस्यापि सिद्धिर्भवति । किं कृत्वा श्रावकस्यापि सिद्धिर्भवतीत्याह । शशिविपदगुणानंदनानंदवृत्तैः शशिवद्विशदा निर्मला ये गुणास्तैरानंदनो हर्षकारी योऽसौ आनंदनामा श्रावकस्तस्यैव वृत्तैराचरणैः कृत्वा । अथ दृष्टांतमाह । चेद्यदि केचित् पांथाः पथिकाः शीघ्रगाभिः शीघ्रगतिकाभिर्नौभिर्बेडिभिः कृत्वा जलधिजलपथैः समुद्रस्य जलमार्गैस्तीरदेशेषु समुद्रतटावप्रदेशेषु आशु शीघ्रं यांति गच्छंति तत् तर्हि क्रमात् क्रमेण शनैः शनैरन्ये स्थलचारिणः पुरुषाः हया अश्वाः करभा उष्ट्रा रथा स्यंदना एतैःकृत्वा भूपथैः स्थलमार्गैः किं न यांति अपि तु शनैः शनैस्तीरदेशेषु यांति । एतावता साधुः कृतसर्वसंगपरित्यागः शीघ्रं सिद्ध्यति श्रावकस्तु शनैः शनैः सदाचारैः सिद्ध्यतीतिभावः ॥२९॥

रुडुं चारित्रपाळवाथी साधुनी शीघ्र सिद्धि थाय छे; श्रावकनी पण चंद्र समान निर्मल गुणथी आनंदकारी आनंद नामना श्रावकना सरखा आचरणे करीने आठ भवमां सिद्धि थाय छे. दृष्टांत कहे छे के, जो केटलाक मुसाफरो शीघ्रजनारा वहाणथी जलमार्गे करीने सामातीरे जलदी पहोचे छे तो बीजा मुसाफरो अश्व उंट

अने रथोये करीने भूमिमार्गे थइ अनुक्रमे ते स्थानके शुं नथी ज-ता ! अर्थात् जाय छे. ॥ २९ ॥

सम्यक्त्वोदारतेजा नवनवफलदावर्त्तरूपव्रतालिः,
सिद्धांतोक्तैकविंशत्यमलगुणगतिः श्राद्धधर्मस्तुरंगः ॥
प्रापय्यांतं भवाब्धेर्नयति शिवपुरं कामदेवादिवत्तत्,
मिथ्यात्वाधीशशंकादिकहयहरतो यत्नतो रक्षणीयः ।३०।

सम्यक्त्वेति । श्राद्धधर्मस्तुरंगः श्रावकधर्मोऽश्वः भवाब्धेः सं-सारसमुद्रस्यांतं प्रापय्य पारं नीत्वा शिवपुरं मोक्षनगरं प्रापयति । किंवत् । कामदेवप्रमुखश्रावकवत् । यथा श्राद्धधर्मस्तुरंगः संसार समुद्रस्य पारं गत्वा कामदेवप्रमुखश्रावकं शिवपुरं प्रापयामास । किंरूपः श्राद्धधर्मस्तुरंगः । सम्यक्त्वमेवोदारतेजो यस्य स तथा। पुनःकिंरूपः । नव नव फलदायिनी आवर्त्तरूपा व्रतालिर्व्रतपरंपरा यत्र स तथा । पुनःकिंरूपः । सिद्धांतोक्ता एकविंशतिसंख्याका अ-मला गुणा एव गतिर्यस्य स तथा। एवं विधःश्राद्धधर्मस्तुरंगो यत्नतः आदरतो रक्षणीयः पालनीयः॥ कस्मात् पालनीयः । मिथ्या-त्वाधीशा मझादयस्तेषां शंकादिकं संदेहप्रमुखमेव हयहरः अश्व-तस्करस्तस्मात् । अन्योऽप्यश्वश्चौराद्रक्ष्यते पाल्यते च ॥३०॥

सम्यक्त्व रूप उदार तेजवालो, नवीन नवीन फलदायक कुं-डालारूप बार व्रतनी पंक्तिवालो अने सिद्धांतमां कहेला एकविश गुण रूप गति छे जेनी एवो श्रावकधर्मरूप अश्व, कामदेवादि श्रा-वकोनी पेठे संसारसमुद्रना अंतने पमाडी मोक्ष नगर. प्रत्ये पहों-

घाडे छे; माटे मिथ्यात्व रूप राजाना शंका कांक्षादिक अश्वचोरोथी ए श्रावकधर्मरूप अश्व यत्नेकरी रक्षण करवा योग्य छे. ॥ ३० ॥

अक्षुद्रो रुपसौम्यो विनयनययुतः क्रूरताशाठ्यमुक्तो,
मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्षः कृतज्ञः॥
सदाक्षिण्यो विशेषी सदयगुणरुचिःसत्कथः पक्षयुक्तो,
वृद्धार्हो लज्जनो यः शुभजनदयितो धर्मरत्नस्य योग्यः॥३१॥

श्रावकाणां गुणानाह। अक्षुद्रेति। एवंविधः श्रावकः सद्धर्म एव रत्नं तस्य योग्यः कथ्यते। अक्षुद्रोऽपरछिद्रान्वेषी १ रूपेण सौम्यः रूपसौम्यः सभामंडनत्वाद्गुणद्वयं रुपवान् २ सौम्यश्च ३ विनयो गुरुजनादीनां नम्रीभावः नयः न्यायमार्गः ताभ्यां युतःसहितः विनयी ४ नयी ५ क्रूरता रौद्राकारता शाठ्यं मायावित्वं ताभ्यां मुक्तः रहितः क्रूरतामुक्तः ६ मायारहितः ७ मध्यस्थो न कदाग्रही ८ दीर्घदर्शी अग्रेतनशुभचिंतकः ९ परहितनिरतः अन्यवात्सल्य तत्परः १० लब्धलक्षः अवसरज्ञाता ११ कृतज्ञः कृतं कार्यं जानातीति कृतज्ञः कार्यज्ञः १२ सदाक्षिण्यः सत्प्रधानं दाक्षिण्यं अनुकुलत्वं यस्यसतथा श्रेष्ठसरलभाववान् १३ विशेषी विशेषो विद्यते यस्मिन्स विशेषी विशेषज्ञ इत्यर्थः १४ सदयो दयावान् १५ गुणरुचिः गुणेरुचिर्यस्यस गुणरुचिः गुणानुरागीत्यर्थः १६ सत्कथः सती प्रधाना कथा वार्ता यस्य स सत्कथः स्त्रीकथा भक्तकथा देशकथा राजकथा भेदाच्चतुर्विना कथा तया रहित इत्यर्थः १७ पक्षयुक्तः उभय पक्षविशुद्धः १८ वृद्धार्हः स्पष्टमेव १९ लज्जनो लज्जावान् २०

शुभजनदयितः शुभजनानां सत्पुरुषाणां दयितो वल्लभो लोकप्रिय इत्यर्थः २१ यःएकविंशतिगुणवान् स्यात् स धर्मरत्नस्य योग्यः ३१

बीजाना छिद्रने नहिं शोधनारो, रूपवालो, सौम्य, गुरु विगेरे म्होटा पुरुषोनो विनय करनारो, नीतिवालो, क्रूरपणाथी अने मायावीपणाथी रहित, कदाग्रह नहिं करनारो, भविष्यमां सारुं थशानो विचार करनारो, बीजाओनुं सारुं करवामां तत्पर, अवसरनो जाण, कार्यनो जाण, सारा सरळ स्वभाववालो, विशेष जाण, दयावालो, गुणने विषे प्रीति धरनारो, सारी वार्ता करनारो, बने पक्षवालो, वृद्धपुरुषने योग्य, लज्जावालो अने सारा माणसोने प्रीय ए एकवीश गुणवालो जे पुरुष होय ते धर्मरत्नने योग्य छे. ॥ ३१ ॥

हवे ये काव्यथी प्राणातिपातविरमण द्वार कहेछे.

( शार्दूलविक्रीडितवृत्तम्. )

धर्माणां गुरुरेव जंतुषु दयाधर्मस्ततो संस्थितः,
श्रीवज्रायुद्धचक्रवर्तिसदृशां नो संगमादेर्हृदि ॥
चूलयां कनकाचलस्य रमते कल्पद्रुमो नो मरौ ।
किं चैरावणवारणः कुनृपतेर्द्वारेऽस्ति यः स्वःपतेः॥३२॥

धर्माणामिति । जंतुषु प्राणिषु दयाधर्मः धर्माणां धर्ममध्ये गुरुरेव गरिष्ट एव ततस्तस्मात्कारणात् श्रीवज्रायुद्धचक्रवर्त्तिसदृशां पुरुषाणां हृदि मनसि स दयामूलधर्मः संस्थितः । संगमादेः संगमोऽभव्यदेवः श्री वीरोपसर्गकर्ता । संगमप्रमुखस्य पुरुषस्य हृदि धर्मो न [illegible] स्थित न चकारेत्यर्थः। दृष्टांतमाह । कल्प

द्रुमः कल्पवृक्षः कनकाचलस्य मेरोः चूलायां चूलिकायां रमते ति-ष्ठति मरौ मरुस्थल्या न रमत एव । यः स्वःपतेरिंद्रस्य द्वारेऽस्ति स चैरावणोः हस्ती कुनृपतिद्वारे किं स्यादपि तु न ॥ ३२ ॥

प्राणीओने विषे दया धर्मरूप धर्म सर्व धर्मोमां श्रेष्ट छे अने तेज कारणथी ते दयाधर्म श्री वज्रायुद्धचक्रवर्ती जेवा पुरुषोना हृदयमां रहेलो छे. संगमदेव प्रमुखना हृदयमां रहेलो नथी. दृष्टांत कहे छे के, कल्पवृक्ष मेरु पर्वतनी चूलिका उपर होयछे; परंतु मरु भूमिने विषे होतुं नथी. वली इंद्रना द्वारने विषे रहेनारो ऐरावण हस्ती बीजा तुच्छ राजाने त्यां शुं होय खरो ? अर्थात् नज होय.॥३२॥

एका जीवदयैव नित्यसुखदा तन्नेमिना स्वामिना,
कन्याराज्यधनादि फल्गुतृणवत् संत्यज्य सैवाहता ॥
सोऽर्हन्वास्य किमुच्यते निजहिते नान्योऽपि मंदायते,
किं कस्याप्यजरामरत्वमथवा नेष्टं सुखं शाश्वतम् ॥३३॥

एकेति । एका अद्वितीया जीवदयैव नित्यं सुखंददातीति नित्यसुखदा शाश्वतसुखदा । तत्तस्मात् कारणात् श्रीनेमिना श्रीनेमिनाथेन स्वामिना फल्गुतृणवन्निरर्थकतृणवत् । कन्या राजीमती राज्यं पृथ्वीसाम्राज्यं धनं द्रव्यं तत्प्रभृति संत्यज्य मुक्त्वा सर्वसुखदायिनी सैव जीवदयैव आदृता अंगीकृता । स श्रीनेमिनाथोऽर्हन् तीर्थंकरस्तस्य किमुच्यते किं कथ्यते । अन्योऽपि सामान्योऽपि जनः आत्मीयहिते स्वेष्टसाधने न मंदायते न आलस्यवान् भवति। कस्य पुरुषस्य अजरामरत्वमथवा शाश्वतं सुखं किं नेष्टं? अपि तु सर्वस्यापीष्टम् ॥ ३३ ॥

एकली जीवदयाज नित्यसुख आपनारी छे, माटे श्री नेमिनाथ प्रभुए राजीमती कन्या, म्होटुं राज्य अने धन विगेरेनो तुच्छ तृणनी पेठे त्याग करीने ए जीवदयानो अंगीकार कर्यो हतो. अरे! ए श्रीनेमिनाथ तो तीर्थंकर हता एटले एमनी तो शी वात करवी? परंतु कोइ बीजो साधारण माणस होय तो ते पण पोताना हितने विषे मंद आचरण करतो नथी अथवा तो शुं कोइ जीवने अजरामरपणुं के शाश्वतसुख इष्ट नथी लागतुं? अर्थात् सर्वने अजरामरपणुं अने शाश्वतसुख इष्ट छे. ॥ ३३ ॥

हवे बे काव्यथी मृषावाद विरमणद्वार कहेछे.

( रथोद्धतावृत्तम्. )

संकटेऽपि न महान् मृषा वदे-
दत्तमातुलककालिकार्यवत् ॥
चंदनः सुरभिरश्मघर्षणेऽ-
पीक्षुरद्भुतरसोऽपि पीलने ॥ ३४ ॥

संकट इति। महान् उत्तम पुरुषः संकटेऽपि विपद्यपि मृषा कूटं न वदेत् न ब्रूयात्। किंवत्। दत्तस्य मातुलकः स चासौ कालिकार्यश्च तद्वत्। कालिकार्यः संकटेऽपि कूटं न वदतिस्म। दृष्टांतमाह। चंदनः अश्मनि पाषाणे घर्षणेऽपि सति सुरभिः परिमलाढ्यो भवति। इक्षुः पीलनेऽपि अद्भुतरसः अत्यंतरसाढ्यः भवति.

महान् पुरुष संकटने विषे पण दत्तपुरोहितना मामा कालिका-

चार्यनी पेठे असत्य बोले नहीं. दृष्टांत कहे छे के, चंदन पाषाणनी साथे घसाया छतां सुगंध आपेछे अने शेरडी पीलाया छतां अद्भुतरस आपे छे. ॥ ३४ ॥

( शार्दूलविक्रीडितवृत्तम्. )

घोरां दुर्गतिमेत्यलीकलवमप्यभ्यर्थितोऽपि ब्रुवन्,
वादे नारदपर्वताख्यसुहृदोर्यद्वद्वसुर्भूपतिः ॥
चक्रेऽर्चाविधुरो विरंचिरनृतात् केतक्यनिष्टा मृषा–
साक्ष्यात्किं न हरिर्भवेन महितःसत्यात्परीक्षाक्षणे।३५।

घोरामिति । यः पुरुषः अभ्यर्थितोऽपि याचितोऽपि अलीकलवं स्तोकमप्यसत्यं ब्रुवन् वदन्सन् घोरां भयानकां दुर्गतिमेति प्राप्नोति । यद्वत् यथा वसुर्भूपतिः नारदपर्वताख्यौ एव सुहृदौ तयोः परस्परं वादे कलहे जाते सति पर्वतमित्रेण प्रार्थितः अलीकलवं वदन्सन् रौद्रां दुर्गतिं नरकगतिं गच्छतिस्म । दृष्टांतमाह । भवेन ईश्वरेण विरंचिर्ब्रह्मा अनृतादलीकभाषणात् अर्चाविधुरः किं न कृतः अपितु कृतः । अद्यापि ब्रह्मा लोके न पूज्यते । केतकी मृषासाक्ष्यात् कूटसाक्षिदानात् ईश्वरेणानिष्टा अवांछनीया किं न कृता । अपि तु कृता । अद्यापि हरमस्तके केतकी न भवति अलीकत्वात् । हरिः कृष्णः परीक्षाक्षणे परीक्षाप्रस्तावे सत्यात् सत्यवचनभाषणात् भवेन किं न महितश्चक्रे पूज्यो नाकारि। अपि तु कृतः। अद्यापि कृष्णः पूज्यते सत्यभाषणप्रभावात् ॥ ३५ ॥

अन्य माणसे प्रार्थना करया छता पण जो कोइ प्राणी लेशमात्र पण जुटुं बोले तो ते भयंकर दुर्गति पामे छे. जेम नारद अने पर्वत ए वे मित्रोना विवादमां वसु राजा असत्य बोली दुर्गति पाम्यो. दृष्टांत कहे छे के, शुं महादेवे ब्रह्माने जुटुं बोलवाथी अपूज्य करया नथी ? केतकीने जुठी साक्षिथी अनिष्ट करी नथी ? अने परीक्षाने अवसरे सत्य वचन बोलवाथी विष्णुने पूज्य करया नथी ? अर्थात् करया छे. ॥ ३५ ॥

हवे वे श्लोकथी अदत्तादान विरतिद्वार कहे छे

( वसंततिलकावृत्तम्. )

वैराग्यशस्त्रहतमोहतमोऽमलांत-
र्दृष्ट्यापदिष्टपरिदृष्टहिताहितार्थः ॥
चौरोऽपि शुद्ध्यति शमेन दृढप्रहारी-
वार्पैति वा दवजवो जलदेन किं न ॥ ३६ ॥

वैराग्येति । चौरोऽपि शमेन क्षांत्या शुद्ध्यति पापान्मुक्तो भवति । किंरूपश्चौरः । वैराग्यं संसारविरागभावः तदेव शस्त्रं तेन हतं मोहतमः रागांधकारं यस्याःसा तथा सा चासौ अमला निर्मलाऽतर्दृष्टिरंतरंगलोचनं तयापदिष्टाः दर्शिताः परिदृष्टाः अवलोकिता हिता आदेया अहिता अनादेया अर्थाः पदार्था येन सः तथा । क इव । दृढप्रहारीव । यथा दृढप्रहारी चौरः शमेन शुद्ध्यतिस्म । दृष्टांतमाह । दवजवः दावानलवेगः जलदेन मेघेन किं न अपैति न नाशं याति । अपि तु क्षयं यात्येव ॥ ३६ ॥

वैराग्य रूप शस्त्रथी हणायुं छे मोह रूपी अज्ञान जेनुं एवी पोतनी निर्मल अंतर्दृष्टिथी देखाड्या छे अने जाण्या छे हित अने अहित ( उपादेय अने हेय ) पदार्थो जेणे एवो चोर पण दृढप्रहारी चोरनी पेठे शमतावडे करीने शुद्ध थाय छे. दृष्टांत कहे छे के, दावानलनो वेग शुं मेघना जळथी शांत नथी थतो ? अर्थात् थाय छे.३६

नानाकलाविदपि लाघवमेति चौर्या–
द्विधानताम्रफलचौर इव प्रियार्थे ॥
दोषो महानधिगुणेऽपि हि लांछनाय,
रत्नाकरे कुजलवच्छशवत् सुधांशौ ॥ ३७ ॥

नानेति । नानाकलां वेत्तीति ईदृशोऽपि पुरुषः चौर्याचरकरताश्रयणात् लाघवं तुच्छत्वं एति गच्छति । क इव । प्रियार्थे कलत्रार्थे विधया नता नम्रीभूताश्चते आम्राः सहकारास्तेषां फलानि तेषां चौरस्तस्कर इव । दृष्टांतमाह ॥ हि यस्मात् अधिगुणे गुणाधिके पुरुषे महान् दोषः लांछनाय कलंकाय स्यात् । कस्मिन्निव किं । रत्नाकरे समुद्रे कुजलवत् क्षारजलवत् । यथा समुद्रे क्षारं जलं लांछनाय जातं । पुनः कस्मिन्निव कः । सुधांशौ चंद्रे शशवत् यथा चंद्रे शशः लांछनाय जातः ॥ ३७ ॥

पोतानी प्रियाने अर्थे विद्याना बळथी नमावेला आम्रवृक्षना फलना चोरनी पेठे नाना प्रकारनी कलाने जाणनारो पुरुष पण चोरीना कृत्यथी लघुताने पामे छे. दृष्टांत कहेछे के, अधिक गुणवालाने विषे पण म्होटो दोष कलंकने अर्थे थाय छे. जेम समुद्रने विषे खारुं जल अने चंद्रने विषे हरिण कलंक रूप थया. ॥ ३७ ॥

हवे चे काव्यथी मैथुन विरमणद्वार कहेछे.

स्युर्ब्रह्मणा नृसुरमोक्षसुखानि किं तु,
जंबूमुनेः सुभगताभिनवैव काचित् ॥
भेजुर्व्रतं सममनेन मुदा प्रियास्ता,
अन्यारता सह जगाम च केवलश्रीः ॥ ३८ ॥

स्युरिति । ब्रह्मणा मैथुनपरित्यागरूपेण व्रतेन नृदेवमोक्षसुखानि मनुष्यदेवसिद्धिसौख्यानि स्युर्भवंति । किंतु जंबूमुनेर्जंबुस्वामिनः सुभगता सुभगत्वं काचिदभिनवैव नवीनैव अभूत् । ताः प्रिया अष्टौ कलत्राणि अनेन जंबूना सह मुदा व्रतं भेजुः दीक्षां जगृहुः इति सुभगता । च पुनः केवलश्रीः केवलज्ञानलक्ष्मीः सह सार्द्धं जंबूना जगाम । किं रूपा केवलश्रीः । अन्यस्मिन् अरता असक्तासती अन्यं पुरुषं नैव वृणुतेस्म, अतः एवं मन्ये । जंबूस्वामिना सहैव केवलश्रीः मोक्षं जगाम । यतः जंबूस्वामिनोऽनंतरं केवलं नोत्पन्नं इत्यपि सुभगता का यस्याचं तं सौभाग्यं स्यात्तस्यानुगामिनी सहचरी अपि भवति तर्हि सुभगता अन्येन सह केनापि केवलश्रीर्न जगाम अनेनसहैवागादिति अभिनवैव काचित्सुभगता.३८

जोके घणा जणने ब्रह्मचर्य पालवाथी मनुष्य, देव अने मोक्षना सुखो प्राप्त थाय छे; तो पण ते ( ब्रह्मचर्य ) थी जंबूस्वामीने तो कोइ नवीनज सौभाग्यत्व प्राप्त थयुं; कारण के, जंबूस्वामीनी स्त्रीयोए पण तेमनीज साथे हर्षथी दीक्षा लीधी अने केवलज्ञान

रुपी लक्ष्मी पण बीजा कोइ उपर आसक्त नहिं थता तेमनीज साथे मोक्षगति पामी. ॥ ३८ ॥

न ब्रह्मतः सकलशर्मकृतश्चलंति,
धीराः सुदर्शन इव व्यसने घनेऽपि ॥
शेषोऽब्धिवृद्धलहरीचलशैलवल्ग-
द्भूभुग्नमौलिरपि विश्वभरं बिभर्त्ति ॥ ३९ ॥

नेति। धीरा धैर्यवंतःपुरुषाः ब्रह्मतश्चतुर्थव्रतरूपात् मैथुनात् सुदर्शन इव घनेऽपि व्यसने कष्टे सति न चलंति चतुर्थव्रतं न त्यजंतीत्यर्थः। किं रूपाद्ब्रह्मतः। सकलशर्मकृतः सकलसुखकारकात्। दृष्टांतमाह। शेषः शेषराजः विश्वभरं पृथ्वीभारं बिभर्त्ति। किं लक्षणः शेषः। अब्धिः समुद्रः तस्य वृद्धलहरी महाकल्लोलश्रेणिः तया चलंतः कंपमानाः शैलाः पर्वताः तैर्वल्गती प्रधाना भूः पृथ्वी तया भुग्नो वक्रीभूतो मौलिः किरीटो यस्य स तथा। अंगीकृतदुःकरमपि धीरा न मुंचंतीत्यर्थः ॥ ३९ ॥

धैर्यवंत पुरुषो गहन दुःखमां आवी पडया छतां पण सुदर्शन शेठनी पेठे ब्रह्मचर्यव्रतथी चलित थता नथी. दृष्टांत कहे छे के, समुद्रना म्होटा तरंगोथी कंपता एवा पर्वतोने लीधे ध्रुजती एवी पृथ्वीथी नमी गयो छे मुकुट जेनो एवो पण शेष विश्वना भारने धारण करे छे. ॥ ३९ ॥

हवे बे काव्यथी परिग्रहपरीमाणद्वार कहे छे.

विश्वोपकारि धनमल्पमपि प्रशस्यं,

किं नंदवत् फलममानपरिग्रहेण ॥
प्रित्यै यथा हिमरुचिर्न तथा हिमौघः,
स्याद्वा यथाऽत्र जलदो जलधिस्तथा न॥४०॥

विश्वेति ॥ अल्पमपि स्तोकमपि धनं विश्वोपकारि सर्वलोककार्यसाधकं सत् प्रशस्यं वर्णनीयं भवति । अमानपरिग्रहेण परिग्रहप्रमाणरहितेन नंदवत् नंदभूपतेरिव पुरुषस्य किं फलं, अपि तु न किंचित्फलमित्यर्थः । दृष्टांतमाह । हिमरुचिश्चंद्रो यथा प्रीत्यै हर्षाय भवति तथा हिमौघो हिमसमूहो न स्यात् । अथवा च पुनः जलदो मेघो यथा प्रीत्यै तथा जलधिः समुद्रो न । एतावता चंद्रमेघौ यथा लघीयांसावपि हर्षाय भवतः तथा हिमसमूहजलधी महत्तरावपि हर्षाय न स्याताम् ॥ ४० ॥

थोडुं पण विश्वने उपकार करवावालुं धन प्रशंसा करवा योग्य छे. परंतु नंदराजानी पेठे प्रमाण रहित एवा परिग्रहे करीने शुं ? अर्थात् कांइ नहीं. दृष्टांत कहे छे के, हिमरुचि एटले शीतल किरणोवालो चंद्रमा, लोकने जेवी प्रीति उत्पन्न करेछे. तेवो हिमनो समूह लोकने प्रीति उत्पन्न करी शकतो नथी. तेमज वली मेघ जेवी प्रीति उत्पन्न करे छे तेवो समुद्र ( खारो समुद्र ) प्रीति उत्पन्न करतो नथी. अर्थात् चंद्र अने मेघ न्हाना छे. तो पण ते लोकने उपकार करनार होवाथी वखणाय छे अने हिम तथा समुद्र बहु म्होटा छता लोकने उपकार करनार न होवाथी वखाणाता नथी.४०

धन्यः परिग्रहमितैः सुखभाग् न पापी,
प्राङ्मम्मणो वणिग्विधहदीश्वरोऽपि ॥

वंद्यः कृतादरमहो जगतो मितश्रीः,
पश्याधिकाधिकवसुः शशभृत् कलंकी ॥ ४१ ॥

धन्येति ॥ धन्यो भाग्यवान् पुरुषः परिग्रहमितैः परिग्रहप्रमाणैः सुखी स्यात् पापी सपापपुरुषो न । प्राक् पूर्वं मम्मणो वणिक् मम्मणनामा श्रेष्ठी ईश्वरोऽपि कोटीश्वरोऽपि एधहृत् काष्टहारक आसीत् ॥ दृष्टांतमाह । अहो इत्याश्चर्ये शशभृच्चंद्रः मितश्रीः स्तोकलक्ष्मीकः सन् द्विकलः सन् जगतो विश्वस्य कृतादरं आदरपूर्वकं यथा स्यात्तथा वंद्यो भवति । पश्य विलोकय अधिकं अधिकं वसु कांति वा द्रव्यं यस्य स तथा एवंविधश्चंद्र कलंकी स्यात् ॥४१॥

भाग्यवंत पुरुष परिग्रहना परिमाणथी सुखी थाय छे. पण कोटी धनवालो छता लाकडाना भारने लावनार मम्मण शेठनी पेठे लोभी पुरुष सुखी नथी. दृष्टांत कहेछे. जुओ के चंद्रमा परिमित लक्ष्मीवालो ( बीजनो चंद्रमा थोडी कलावालो ) होय छे त्यारे लोको तेने आदरथी वंदन करे छे; परंतु ज्यारे तेज चंद्रमा अधिक अधिक किरणवालो थाय छे त्यारे कलंकयुक्त थाय छे ॥४१॥

हवे बे काव्ये करीने दिग्विरतिद्वार कहे छे.

सीमस्थिते जलनिधौ निजकालमाने,
शीतातपांभसि च जीवति जीवलोकः ॥
दिग्यानमानमपि जंतुहिताय तद्वत्,
स्याच्चारुदत्तवदिहाप्रयतोऽतिदुःखी ॥ ४२ ॥

सीमेति ॥ जलनिधौ समुद्रे सीमस्थिते मर्यादावर्तमाने सति जीवलोको जीवति । च पुनः शीतातपांभसि शीतकाले उष्णकाले वर्षाकाले निजकालमाने निजमस्ताववर्त्तमाने सति जीवलोकः सुखं जीवति । दिग्यानं दिग्गमनं तस्य मानं प्रमाणं जंतुहिताय प्राणिहिताय भवति । तथा अप्रयतः अप्रमाणीकृतदिग्गमनः मन् चारुदत्तः श्रेष्ठिपुत्रस्तद्वत् इहलोकेऽतिदुःखी स्यात् । तथाऽन्योऽपि अकृतदिग्गमनप्रमाणो दुःखपात्रं स्यात् ॥ ४२ ॥

समुद्र पोतानी मर्यादामां रहे छते तथा शीयाळो, उनाळो अने चोमासुं पोतपोतानी कालमर्यादामां रहे छते आ जीवलोक सुखे जीवे छे. तेवी रीते दिशाना परिणामनुं व्रत पण जीवोना कल्याणने अर्थे थाय छे; परंतु आ व्रतनो अनादर करनार पुरुष चारुदत्तनी पेठे घणु दुःखी थाय छे. ॥ ४२ ॥

( शिखरिणीवृत्तम्. )

न गम्यं नागम्यं क्वचिदकृतदिग्यानविरतेः,
कथं वा स्याद्विश्वे सततगतिरेकत्रवसतिः ॥
द्वितीयद्वीपांतर्गतभरतमाक्रांतजलधि-
र्न किं द्रौपद्यर्थे हरिरमरकंकापुरमगात् ॥ ४३ ॥

नेति ॥ अकृता दिग्यानस्य दिग्गमनस्य विरतिः प्रमाणं येन- सः तथा तस्य पुरुषस्य क्वचिदपि क्वापिस्थानं गम्यं न क्वचिदपि अगम्यं न अगमनीयं न । किंतु सर्वत्र गम्यागम्यत्वमेव न । वायवा

विश्वे त्रैलोक्ये सततगतिर्वायुरेकत्रवसतिः एकस्थानककृतावस्थानः कथं स्यात् । अपि तु एकस्थानावस्थायी न स्यात् ॥ दृष्टांतमाह ॥ हरिः श्रीकृष्णः द्रौपद्यर्थे द्रौपद्याः पांडवपत्न्या अर्थे हेतवे अमरकंकापुरं किं नागात् अपि तु जगामैव । कथंभूतःहरिः । आक्रांतजलधिः आक्रांतो जलधिर्येन स तथा समुद्रमुल्लंघ्येत्यर्थः । किं रूपं अमरकंकापुरं । द्वितीयद्वीपः धातकीखंडः तन्नांतर्गतभरतं भरतक्षेत्रांतर्गतं प्राप्तं वर्तमानं । एतावता धातकीखंडमध्ये भरतक्षेत्रे अमरकंकानगरं।नारायणो द्रौपद्यानयनार्थं जलधिं तीर्त्वा तत्र जगामेति भावः ॥ ४३ ॥

जेणे दिग्विरमण व्रत अंगीकार कर्युं नथी, तेने कोइ पण स्थान जवा योग्य अथवा न जवा योग्य नथी. अथवा तो विश्वने विषे निरंतर गति करनार एवो जे वायु ते एक स्थानके निवास करनारो केवी रीते थाय ? दृष्टांत कहेछेके, श्रीकृष्ण वासुदेव द्रौपदीने अर्थे समुद्रने उलंघीने धातकी नामना बीजा खंडमां रहेला भरत क्षेत्रमां अमरकंका नगरी प्रत्ये शुं नहोता गया ? अर्थात् गया हता. ॥ ४३ ॥

हवे ए काव्यथी भोगोपभोगविरमणद्वार कहेछे.

( वसंततिलकावृत्तम्. )

भोगोपभोगनियमोऽपि शिवाय चेन्न,
स्याद्वंकचूल इव देवपदप्रदस्तु ॥
प्रीणाति चातकमनन्यरतिं पयोद--

श्चूताशनैकरसमन्यभृतं वसंतः ॥ ४४ ॥

भोगेति । भोगोपभोगनियमो चेद्यदि शिवाय मोक्षाय न स्यात् । यत्तदोरेकसंबंधः । तर्हि तु पुनः वंकचूल इव देवपदं प्रददातीति तथा देवपदप्रदायको भवत्येव ॥ दृष्टांतमाह ॥ पयोदो मेघश्चातकं प्रीणाति संतोषयति । किंभूतं चातकं । अनन्यरतिं न अन्यस्मिन् रतिर्यस्येति तथातं नान्यासक्तमित्यर्थः । वसंतः अन्यभृतं कोकिलं प्रीणाति। किंरूपं अन्यभृतं। चूतं सहकारफलं तस्याशने भक्षणे एको रसो यस्य स तथा तं ॥ ४४ ॥

जो भोगोपभोगनो नियम मोक्ष आपनारो थतो नथी; तो पण ते वंकचूलने थयो तेम ( अन्यजनोने ) देवपदवी आपनारो तो थायज छे. दृष्टांत कहे छे के, मेघ, बीजा कोइ उपर नथी प्रीति जेने एवा चातक पक्षीने संतोष आपे छे; अने वसंत, आम्रफल ( केरी ) ने खावामां प्रीतिवाला कोकिलने संतोष पमाडे छे. ॥ ४४ ॥

भोगादिलोलुपतया लघुता न शर्म,
श्री ब्रह्मदत्तसखिविप्रकुटुंबवत् स्यात् ॥
पीताधिकेंदुरुचिरुज्झति सीम सिंधुः,
शक्रोऽपि गौतमकलत्ररतश्च शप्तः ॥ ४५ ॥

भोगेति । भोगादेः लोलुपता तया लघुता लाघवत्त्वं स्यात् भवति शर्म सुखं न । किंवत् । श्री ब्रह्मदत्तस्य चक्रिणः सखा स चासौ [illegible] तद्वत् । दृष्टांतावाह । सिंधुः समुद्रः सीम

मर्यादां उझति त्यजति । कथंभूतः सिंधुः । पीता अधिकेंदुरुचिः कांतिर्येन स तथा । शक्रोऽपि इंद्रोऽपि गौतमऋषिकलत्रेऽहल्यायां शक्तः सन् शप्तः गौतमेन ऋषिणा सहस्रभगो भवेति शप्तः ॥४५॥

ब्रह्मदत्त चक्रवर्तीना मित्र ब्राह्मणना कुटुंबनी पेठे भोगादिकनी लोलुपताने लीधे माणसने लघुता प्राप्त थाय छे, परंतु सुख थतुं नथी. दृष्टांत कहेछे. समुद्रे चंद्रमानी कलानुं पान कर्युं तो ते मर्यादानो त्याग करे छे अने इंद्र, गौतम ऋषिनी स्त्रीने विषे आसक्त थयो तो तेने शाप मल्यो छे. ॥ ४५ ॥

हवे बे काव्यथी अनर्थदंडविरमणद्वार कहे छे.

नानर्थदंडमघदं दधते महांत,
एकेषुमात्रविजयीव स चेटभूपः ॥
लोकस्य जाड्यहृतये तरणेः प्रभान्हि,
तापच्छिदे च शशिनो निशि नो तदर्त्यै ॥४६॥

नानर्थेति । महांतः सत्पुरुषाः अघदं पापदायकं अनर्थदंडं न दधते न धारयंति । स प्रसिद्धः चेटभूपतिः चेटकनृपः एकेषुमात्र विजयी एकेन इषुमात्रेण बाणमात्रेण विजयत इत्येवं शीलः स इव । दृष्टांतावाह । तरणेः प्रभा सूर्यस्य कांतिः अन्हि दिवसे जाड्यहृतये शीतापनोदाय भवति । च पुनः शशिनश्चंद्रस्य प्रभा निशि रात्रौ तापच्छिदे भवति । तदर्त्यै लोकपीडायै न भवति किं तु लोकानां हर्षायैव भवति ॥ ४६ ॥

फक्त एकज घाणथी विजयी थयेला चेडा राजानी पेठे महांत पुरुषो पापदायक एवा अनर्थदंडने धारण करता नथी. दृष्टांत कहे छे के, दिवसे सूर्यना किरणो लोकनी टाढ दूर करवाने माटे छे अने रात्रीए चंद्रना किरणो तापने दूर करवा माटे छे; परंतु एके लोकोने पीडा करवाने अर्थे नथी थता. ॥ ४६ ॥

मूढो मुधैति कुगतिं धिगनर्थदंडात्,
चक्रित्वमिच्छुरिव भूभृदशोकचंद्रः ॥
किं नांगभंगमयते शरभोऽब्दशब्द-
मभ्युत्पतन् परिणमंश्च गजोऽनुशैलम् ॥४७॥

मूढेति ॥ मूढो मूर्ख अनर्थदंडात् कुगतिं नरकादिगतिं मुधैव निःफलमेव एति याति । अतस्तमनर्थदंडं धिक् कड्व । अशोक चंद्रो भूभृदिव श्रेणिकराजसुतः कोणिक इव । कथंभूतः अशोकचंद्रः । चक्रित्वमिच्छुः । स चक्रवर्तित्वं वांछन् नरकं जगाम । दृष्टांतमाह । शरभः पंचभद्रः अब्दशब्दं मेघध्वनिमभ्युत्पतन् उर्द्ध संमुखं गच्छन् अंगभंगं शरीरविध्वंसं किं न अयते किं न गच्छति अपि तु देहभंगं यात्येव । च पुनर्गजः अनुशैलं प्रतिपर्वतं परिणमन् दंतप्रहारं कुर्वन् अंगभंगं किं न अयते न गच्छति अपि तु यात्येव.४७

चक्रवर्ती थवानी इच्छावाला अशोकचंद्र राजानी पेठे, मूढ पुरुष अनर्थदंडथी नरकादि कुगति पामे छे, माटे ते अनर्थदंडने धिक्कार छे. दृष्टांत कहे छे के, मेघना शब्द सामे उच्छलतो एवो

अष्टापद प्राणी अने दरेक पर्वतपर दंतप्रहार करतो एवो हाथी ए बन्ने जणानुं शरीर शुं भांगी जतुं नथी ? अर्थात् भांगी जाय छे ॥४७॥

हवे बे काव्यथी सामायिकद्वार कहे छे.

सामायिकं द्विघटिकं चिरकर्मभेदि,
चंद्रावतंसकवदुच्चधियोऽत्र किं तु ॥
स्पर्शेऽपि सत्यमुदकं मलिनत्वनाशि,
घोरं तमो हरति वा कृत एव दीपः ॥४८॥

सामायिकमिति । द्विघटिके अवधिर्यत्र तत् द्विघटिकं सामायिकं चिरकर्मभेदि चिरकालोपार्जितानि कर्माणि भिनत्तीति चिरकर्मभेदि स्यात् । क इव । चंद्रावतंसकराजवत् । तु पुनः अत्र सामायिके उच्चा उत्कृष्टधीर्यस्य स उच्चधीः तस्य उच्चधियः पुरुषस्येव किं । दृष्टांतमाह । उदकं जलं स्पर्शेऽपि सत्यं मलिनत्वनाशि मलिनत्वनाशकं भवति ॥ वा अथवा कृत एव दीपः घोरं रौद्रं सूचिभेद्यं निबिडं तमोंधकारं हरति स्फेटयति ॥ ४८ ॥

चंद्रावतंसक राजानी पेठे बे घडी पाळेलुं सामायिक पण लांबा वखतना कर्मनो नाश करे छे, तो पछी ए सामायिक उच्च बुद्धि वाळा पुरुषना कर्मने नाश करे तेमां तो वातज शी करवी ? ए वात सत्य छे. जल फक्त स्पर्शथीज मलिनतानो नाश करे छे अने प्रगट थयेलो दीवो तुरत घोर अंधकारनो नाश करे छे. ॥४८॥

सामायिकं समतयारिसुहृत्सुसिद्ध्यै,

प्रद्योतमुक्तिकृदुदायिनराजवत् स्यात् ॥
सचंदनांशुकमिवास्फुटकुष्टभाज-
स्तत्कुर्वतः कपटतो बहिरंगशुद्ध्यै ॥ ४९ ॥

सामायिकमिति । अरिसुहृत्सु समतया शत्रुमित्रेषु समभावेन सामायिकं सिद्ध्यै मुक्त्यै भवति । किंवत् । प्रद्योतमुक्तिकृदुदायिनराजवत् चंडप्रद्योतमुक्तकारिणः उदायनराजस्येव । दृष्टांतमाह । तत्सामायिकं कपटतोऽपि छद्मतोऽपि कुर्वतः पुरुषस्य बहिरंग शुद्ध्यै शरीरनैर्मल्याय भवति । किमिव । अस्फुटकुष्टभाजः पुरुषस्य सचंदनांशुकमिव । यथा सचंदनं गौशीर्षचंदनं अंशुकं वस्त्रं वा बहिरंगशुद्ध्यै भवति । तथैव सामायिकं स्यादिति ॥ ४९ ॥

शत्रु अने मित्रने विषे समभाव राखीने सामायिक करवुं होय तो ते, प्रद्योतन राजाने छोडी मूकनारा उदायन राजाने थयुं तेम मुक्तिने अर्थे थाय छे; परंतु जो ते कपटथी करवुं होय तो पण ते जेने कोढनो रोग स्पष्ट प्रगट थयो नथी एवा माणसे चंदननो लेप तथा वस्त्र ओढाडयानी पेठे फक्त बहारनी अंग शुद्धिने अर्थे थाय छे ॥ ४९ ॥

हवे ते काव्यथी देशावकाशिद्वार कहे छे.

देशावकाशिकमपास्य सकाकजंघ-
कोकाशवद्विपदमेति जनः प्रमादी ॥
धत्ते प्रभां दिनकरो न निशाकरोऽपि,
न स्तूयतेऽपि च पयोभृदकालवृष्टः ॥ ५० ॥

देशेति। जनः मनुष्यः देशावकाशिकं अपास्य त्यक्त्वा विपदं प्राप्तिं गच्छति। कथंभूतः जनः। प्रमादी प्रमत्तः। किंवत्। सकाकमंध्रतोकाशवत काकजंघनृपमाहितकोकाशसूत्रधारवत्। अथ लौकिकदृष्टांतमाह। निशाकरश्चंद्रो दिनचरो दिवसे उदितः सन् द्युतिं न भरो न धारयति। च पुनः पयोभृन्मेघोऽकाले वृष्टः सन् लोकैर्न स्तूयते ॥ ५० ॥

प्रमादी माणस, देशावकाशिकव्रतने त्यजी दइने काकजंघ रा जा अने कोकाश सुथारनी पेठे विपत्ति पामे छे. दृष्टांत कहे छे के, दिवसे उदय पामेलो चंद्र कांतिने धारण करतो नथी अने अकाले वरसेलो मेघ लोकोथी वखणातो नथी. ॥ ५० ॥

( मालिनीवृत्तम्. )

गुरुवचनवियोगाज्ञातदेशावकाशो,
विपदि तरति पुण्याज्ञेयथा लोहजंघः॥
हयमथ वृषभा वा स्वामिना वाह्यमानाः,
सततनमितगन्त्या किं हितं स्वस्य कुर्युः॥५१॥

गुरुवचनेति। [illegible] पुण्यं स्यात्तर्हि विपदि आपदि पतितः सन् [illegible]। जीवः। कथंभूतो जीवस्तरतीत्या- शंक्याह। [illegible] आचार्यवचनरहित्यात् न ज्ञातं देशावकाशिकं व्रतं येन स तथा। [illegible] लोहजंघो यथा। [illegible]

वकाशस्वरूपः पुण्याद्भवोदितं आपदि सत्यं तरांतस्म तीर्णवान् कष्टमिति शेषः । दृष्टांतमाह । हयमयहयमाः अश्वोष्ट्रकुकुदंतः स्वामिना धनिकेन सततं निरंतरं अमितगत्या अप्रमाणगमनेन वाह्यमानाः खेद्यमानाः संतः स्वस्य आत्मनः हितं किं कुर्युः । अपि तु आत्मनः किमपि हितं धर्मं न कुर्वीत ॥ ५१ ॥

गुरुनां वचनना वियोगने लीधे मंदी आव्युं वैराग्यकारिरूप व्रत जेणे एवो पुरुष विपत्तिने विषे पड्या छतां पण लोहजंघनी पेठे पुण्यथी कष्टने तरे छे. दृष्टांत कहे छे के, स्वामीए निरंतर अप्रमाण गतिवडे वहन करेला अश्व, उंट अने बलद शुं पोतानुं हित करे ? अर्थात् नज करे. ॥ ५१ ॥

हवे बे काव्यथी पौषधव्रतद्वार कहे छे.

( वृत्तम् )

शुचिपौषधेन मुनितुल्यतेति किं,
जिनतापि मेघरथवद्भवेत् क्रमात् ॥
किमु निर्द्धनस्य मणिनेष्टदायिना,
धनितुल्यतैव नृपतुल्यता न किम् ॥ ५२ ॥

शुचीति । शुचिपौषधेन निर्मलपौषधव्रतेन मुनितुल्यता मुनिसादृश्यं भवतीति किं वाच्यं क्रमादनुक्रमेण जिनतापि तीर्थंकरत्वमपि स्यात् । किंवत् । मेघरथवत् । यथा मेघरथः श्री शांतिनाथजीवः तस्य क्रमेण शुचिपौषधेन तीर्थंकरत्वमपि बभूव तमाह । निर्द्ध... मनोवांछितदायक

चिंतामणिना धनितुल्यता लक्ष्मीवत्सादृश्यं स्यादेव इति किं वाच्यं नृपतुल्यता किं न स्यादपि तु भूपतिसादृश्यमपि भूयादिति ॥५२॥

पवित्र एवा पौषध व्रते करीने गृहस्थने पण मुनिनी तुल्यता प्राप्त थाय छे तेमां शुं नवाइ? परंतु ते पौषधव्रतथी अनुक्रमे मेघरथनी पेठे तीर्थंकर पद पण प्राप्त थाय छे. दृष्टांत कहे छे के, निर्धन पुरुषने, इच्छित अर्थ आपनारा चिंतामणिरत्नथी शुं धनवाननी तुल्यता थाय छे अने राजानी तुल्यता शुं नथी थती? ॥ ५२ ॥

( वसंततिलकावृत्तम्. )

सत्पौषधं विविधसिद्धिदमौषधं य-
त्तद्भावनाशमरसार्द्रहृदग्निलीढः ॥
स्वः सागरेंदुरजनि स्फुटहेममूर्ति-
रौर्वाग्नितप्तविमलोऽद्रिरिवाब्धिमंथाः ॥५३॥

सत्पौषधमिति ॥ यत् सत्पौषधं विविधसिद्धिदमौषधं वर्तते । तत्तस्य पौषधस्य भावना तत्र शमरूपो रसश्च समरसस्तेन आर्द्रम् कठोरं हृत् हृदयं तदेवाग्निस्ते । लीढः अस्वादितः । न सागरचंद्रः स्वः स्वर्गे स्फुटहेममूर्ति प्रकटसुवर्णदेहोऽजनि जातः । अन्यदपि वस्तु भावनया सुवर्णसिद्धिदायकरससंयोगेन अग्निना लीढं हेम भवति । यथा अब्धिमंथाः अद्रिर्मेरुपर्वतः और्वाग्नितप्तो वाडवानलतप्तो अतएव विमलो निर्मलो जातः ॥ ५३ ॥

विविध सिद्धिने आपवामां औषधरूप जे पौषधव्रत छे, तेनी

भावनामां शमतारूप रसे करीने भिंजायलुं जे हृदय ते रूप अग्निथी स्पर्शित थयेलो सागरचंद्र राजा, वाडवानल अग्निना तापथी निर्मल थयेला मेरु पर्वतनी पेठे स्फुट सुवर्ण समान देह छे जेनो एवो छतो स्वर्गने विषे गयो छे. ॥ ५३ ॥

हवे बे काव्यथी अतिथीसंविभागद्वार कहे छे.

( मालिनीवृत्तम्. )

किमपि फलमपूर्वं संविभागस्य साधो-
र्यदभिलषितसिद्ध्यै मूलदेवेऽपि माषाः ॥
कृशमपि हि सुपात्रे न्यस्तमुच्चैः फलर्द्ध्यै,
ननु तृणमपि धेनोर्दुग्धपीयूषवृद्ध्यै ॥ ५४ ॥

किमपीति । साधोः मुनिराजस्य संविभागस्य पात्रदानस्य फलं किमपि अपूर्वं भवति । यद्यस्मात् मूलदेवे माषा अपि अभिलषितसिद्ध्यै मनोवांछितसिद्धयेऽभूवन् । माषाः सुपात्राय दत्ताः संत इति शेषः । हि निश्चितं कृशमपि स्तोकमपि पात्रे न्यस्तं सत् उच्चैः फलर्द्ध्यै उत्कृष्टफलसमृद्धये भवति । दृष्टांतमाह । ननु निश्चितं धेनोः तृणमपि न्यस्तं सत् दुग्धपीयूषवृद्ध्यै दुग्धामृतवर्पणाय भवति । स्तोकं सुपात्रे दीयते बहुफलं लभ्यते इति भावः॥५४॥

मुनिराजने पात्रदाननुं कांइ अपूर्वज फल छे. कारण साधु मुनिराजने वहोरावेला माष अडद-पण मूलदेवने इच्छितवस्तुनी सिद्धि आपनारा थया छे. निश्चे थोडुं पण सुपात्रने विषे आपलुं होय तो ते उत्कृष्ट फलनी सिद्धिने माटे थाय छे. दृष्टांत कहे छे के, गायने आपेलुं घास पण दुध रूप अमृतनी वृद्धिने माटे थाय छे.

यदसदपि ददौ प्राक् शालिभद्रोऽतिथेः स्वं,
तदसदपि स लेभे कामरर्द्धिः क मर्त्यः ॥
क भुवि जलधिरिंदुः क्वांबरे तं स पुष्णा-
त्यमृतभृतपयोदं शोषणेऽप्यौर्ववन्हेः॥ ५५॥

यदिति। शालिभद्रः अतिथेः मुनिराजस्य स्वं यद् असदपि अविद्यमानमपि परमान्नरूपं प्राक् पूर्वजन्मनि ददौ दत्तवान्। तत्तस्माद् स शालिभद्रः असदपि मर्त्यलोके अविद्यमानमपि लेभे प्राप्तवान्। सुखमितिशेषः। अन्यथा अमरर्द्धिः क देवसमृद्धिः क मर्त्यः क मनुष्यः क। दृष्टांतमाह। भुवि पृथिव्यां जलधिः समुद्रः क अंबरे आकाशे इंदुश्चंद्रः क। स इंदुः तं जलधिं पुष्णाति वृद्धिं नयति। किंरूपं तं समुद्रं। और्ववन्हेः शोषणेऽपि अमृतभृतपयोदं। अमृतेन पानीयेन भृतः पोषितः पयोदो मेघो येन स तथा तं अमृतभृतपयोदं॥ ५५॥

पूर्वभवे शालिभद्रे, जे परमान्न रुप पोतानी वस्तु नहिं छतां पण मुनिराजने वहोरावी; तेथी तेणे मनुष्यलोकमां नहि मली शके तेवुं सुख प्राप्त कर्युं. नहिं तो देवसमृद्धि क्यां अने मनुष्यपणुं क्यां? दृष्टांत कहे छे के, समुद्र पृथ्वी उपर छे अने चंद्रमा आकाशमां छे तो पण ते चंद्रमा, वडवानल अग्निथी शोषण थया छतां पण जलवडे मेघनी पुष्टी करनारा समुद्रनुं पोषण करेछे.॥५५॥

हवे बे काव्यथी सात क्षेत्रद्वार कहे छे—

( इन्द्रवंशावृत्तम्. )

क्षेत्रेषु सप्तस्वपि पुण्यवृद्धये,

वपेद्धनं संप्रतिराजवद्धनी ॥
कृषीवलः केवलशालितंदुलान्,
वपेत्स किं योऽखिलशस्यलालसः॥ ५६ ॥

क्षेत्रेष्विति । धनी लक्ष्मीवान् पुरुषः पुण्यवृद्धये धर्मपोषणाय जिनभुवनादिषु सप्तसु क्षेत्रेषु धनं द्रव्यं वपेत् । किंवत् । संप्रतिराजवत् । दृष्टांतमाह । यः कृषीवलः कर्षुकः अखिलशस्यलालसः समस्तधान्यरसिको भवति सः कृषीवलः केवलशालितंडुलान् किं वपेत् ? अपि तु अन्यान्यपि धान्यानि वपतीत्यर्थः ॥ ५६ ॥

धनवान् माणसे संप्रति राजानी पेठे पुण्यनी वृद्धिने अर्थे साते क्षेत्रोमां धन वावधुं. दृष्टांत कहे छे के, सर्व प्रकारना धान्यनी इच्छावालो खेडुत शुं फक्त शालना चोखानेज वावे ? अर्थात् सर्व धान्यने वावे छे. ॥ ५६ ॥

(इन्द्रवज्रावृत्तम्,)

क्षेत्राणि सप्तापि फलंति सर्व-
मप्येककं कल्किजवत् सुजुष्टम् ॥
यत्पुण्यमारात्रिकसप्तदीपै-
रेकेनतन्मंगलदीपकेन ॥ ५७ ॥

क्षेत्राणीति । सप्तापि क्षेत्राणि सर्वं फलंति । परं एकं मपि सुजुष्टं स... [illegible] सर्वं फलति । किंवत । कल्कि...

लिकपुत्रवत् । दृष्टांतमाह । आरात्रिकसप्तदीपैर्यत्पुण्यं भवति तत्पुण्यं एकेन मंगलदीपकेन भवति ॥ ५७ ॥

साते क्षेत्रो तो सर्व प्रकारना फलदायी थाय; परंतु सारी रीते सेवन करेलुं एक क्षेत्र पण कल्किपुत्रने थयुं तेम सर्व प्रकारना फल आपनारुं थाय छे. दृष्टांत कहे छे के, आरतीना सात दीवाथी जे पुण्य थाय छे ते पुण्य एक मंगल दीवाथी पण थाय छे.॥५७॥

हवे बे काव्यथी जिनबिंबद्वार कहे छे.

(वसंततिलकावृत्तम्.)

विंबं महल्लघु च कारितमत्र विद्यु-
न्माल्यादिवत् परभवेऽपि शुभाय जैनम् ॥
ध्यातुर्गुरुर्लघुरपीप्सितदायिमंत्रः,
प्राग्दौस्थ्यभाविघनविघ्नभिदे न किं स्यात् ॥५८॥

बिंबमिति । अत्र इहलोके जैनं बिंबं महल्लघु च कारितं सत् परभवेऽपि शुभाय श्रेयसे भवति । किंवत् । विद्युन्माल्यादिवत् । दृष्टांतमाह । ईप्सितदायिमंत्रः मनोवांछितदायको मंत्रः ध्यातुः पुरुषस्य प्राक् पुरातनं दौस्थ्यं दरिद्रता तेन भवतीति एवंविधं घनं निबिडं विघ्नं अंतरायः तस्य भिदे छेदनाय किं न स्यात् अपि तु पुरातनं दौस्थ्यविघ्नं स्फेटयत्येव मंत्रः । कथंभूतः मंत्रः । गुरुरथवा लघुः बह्वक्षरो वा अल्पाक्षरः ॥ ५८ ॥

आ लोकमां एक पण म्होटुं के न्हानुं जिनबिंब कराव्युं होय तो ते विद्युन्मालिने थयुं तेम परभवने विषे पण श्रेयने माटे थाय

छे. दृष्टांत कहे छे के, म्होटो के न्हानो एवो पण इष्टफल देनारो मंत्र, ध्यान धरनारना पूर्वभवना दुष्कर्मथी थयेला दारिद्रपणारूप भयंकर विघ्नने भेदवाने माटे शुं नथी थतो ? अर्थात् थाय छे.५८

( शार्दूलविक्रीडितवृत्तम्. )

निर्मायार्हतबिंबमार्हतपदस्थानाग्रिमं धार्मिकः,
स्वात्मानं च परं च निर्मलयति स्तुत्यर्चनावंदनैः ॥
मंत्री श्रेणिकसूरिवार्द्रकसुतं मोहांधकारे स्थितं,
दीपः पुष्यति कस्य कस्य न मुदं श्रेयःश्रियामास्पदम्

निर्मायेति । धार्मिकः धर्मिष्ठः आर्हतबिंबं जिनप्रतिमां निर्माय कृत्वा स्वात्मानं स्वं परमन्यं च निर्मलयति पवित्रयति । किं कृत्वा स्तुत्यर्चनवंदनैः वर्णनापूजानमस्करणैः । किं रूपं आर्हतबिंबं । आर्हतपदस्थानाग्रिमं मुक्तिपदस्थानप्रधानं । क इव कं निर्मलयति । श्रेणिकसूः मंत्री आर्द्रकसुतं इव । यथा श्रेणिकराजपुत्रोऽभयकुमारो मंत्री आर्हतबिंबं कृत्वा आत्मानं निर्मलयतिस्म परं च आर्द्रककुमारं निर्मलयतिस्म । किंभूतं आर्द्रकसुतं । मोहोऽज्ञानं स एवांधकारः तत्र स्थितं वर्त्तमानं । दृष्टांतमाह । दीपः कस्य कस्य पुरुषस्य मुदं हर्षं न पुष्यति । कथंभूतः दीपः । श्रेयःश्रियां प्रधान लक्ष्मीणां आस्पदं आश्रयो निवासः । अपि तु सर्वेषामपि हर्षं करोति ॥ ५९ ॥

धार्मिक पुरुष, मोक्षमार्गना प्रधान स्थान एवा अरिहंतना प्रतिबिंबने निर्माण करीने तथा तेनी स्तुति, पूजा अने वंदना करीने

जेम अभयकुमारे पोताने तथा मोहांधकारमां रहेला आर्द्रककुमारने निर्मल कर्यो तेम पोताना तथा परना आत्माने निर्मल करे छे. दृष्टांत कहे छे के, कल्याणनी लक्ष्मीना स्थानकरूप एवो जे दीपक ते कोना हर्षने पुष्ट करतो नथी ? ॥ ५९ ॥

हवे बे काव्यथी चैत्यद्वार कहे छे.

( वसंततिलकावृत्तम्. )

तीर्थं मुदे स्वपरयोरपि कीर्तिपाल-
भूपालकारिततुरंगमबोधवत् स्यात् ॥
उद्यानसारसहकारवनं फलर्द्ध्यै,
किं वप्तुरेव न पुनस्तदुपासकानाम् ॥ ६० ॥

तीर्थमिति । तीर्थं चैत्यं स्वपरयोरपि मुदे हर्षाय स्यात् । किंवत् । कीर्तिपालभूपालकारिततुरंगमबोधवत् कीर्तिपालनृपेण कारिताश्वावबोधकतीर्थवत् तद्भृगुक्षेत्रे प्रसिद्धं । दृष्टांतमाह । उद्याने सारं यत् सहकारवनं तत् किं वप्तुरेव बिजादिवापकस्यैव फलर्द्ध्यै भवति पुनस्तदुपासकानां तत्सेवकानां फलर्द्ध्यै न भवति । अपि तु वप्तुस्तत्सेवकानामपि च फलसमृद्धये भवति ॥ ६० ॥

कीर्तिपाल राजाए भृगुक्षेत्रने विषे करावेला अश्वावबोधक चैत्यनी पेठे सर्व चैत्यो, बनावनारने तथा बीजाओने हर्ष उत्पन्न करे छे. दृष्टांत कहे छे, उत्तम आम्रवृक्षोनुं वन, शुं तेना वावनारनेज फलसिद्धि आपे छे अने सेवनारने नथी आपतुं ? अर्थात् बन्नेने आपे छे.

वित्तं स्थिरं सुकृतकीर्तिकरं च वाढ-

वल्यादिवद्विविधतीर्थनिवेशकानाम् ॥
केतूल्लसद्भरतपुण्ययशोऽर्थवाद-
मष्टापदं क इव नानमदद्ययावत् ॥ ६१ ॥

वित्तमिति । विविधतीर्थनिवेशकानां बहुविधचैत्यस्थापकानां पुरुषाणां वित्तं द्रव्यं स्थिरं सुकृतकीर्तिकरं च पुण्ययशःकारकं भवति । किंवत् । बाहुबल्यादिवत् बाहुबलिप्रमुखवत् । अद्ययावत् अद्यापि क इव पुरुषोऽष्टापदतीर्थं नानमत् ? अद्यापि तु सर्वोऽपि लोकोऽष्टापदमनंसीत् । किं विशिष्टमष्टापदं । केतुना ध्वजेन उल्लसत् देदीप्यमानः भरतचक्रवर्तिपुण्ययशोऽर्थवादः कथनं यत्र स तथा तं ॥ ६१ ॥

बाहुबलिनी पेठे विविध तीर्थनी स्थापना करनाराओनुं द्रव्य स्थिर थाय छे अने सुकृत-पुण्य तथा कीर्तिने करनारुं पण थायछे. दृष्टांत कहे छे के, ध्वजावडे करीने देदीप्यमान थया भरत चक्रवर्तीना पुण्य अने यशनी प्रशंसा करनार अष्टापद तीर्थने आजपर्यंत कोणे नमस्कार नथी कर्यो ? ॥ ६१ ॥

हवे बे काव्यथी ज्ञानद्वार कहे छे.

ज्ञानं जगत्त्रयहितं पुनरप्यधीते,
ज्ञोऽप्यार्यरक्षित इवेतरशास्त्रपाठैः ॥
ये स्वर्णधीकनककाचकृतादरास्ते,
हेमैव सत्यमधिगम्य किमु त्यजंति ॥६२॥

ज्ञानमिति । ज्ञानं चतुर्दशपूर्वरूपं यज्जगत्रयाद्दितं त्रैलोक्यवात्सल्यकारि वर्तते । एवंविधं ज्ञानं यः पुरुषः पुनरप्यधीते पठति । कैः कृत्वा । इतरशास्त्रपाठैः अन्यग्रंथपठनैः । किदृशः पुरुषः । ज्ञोऽपि विद्वानपि । क इव । आर्यरक्षित इव । यथार्यरक्षितः ज्ञोऽपि विद्वानपि अन्यशास्त्रपठनैः कृत्वा ज्ञानं अधीतेस्म तथा न्योऽपि ज्ञानं अधीते । दृष्टांतमाह । ये पुरुषाः स्वर्णधिया कनक सदृशा ये काचास्तेषु कृतादराः स्युस्ते पुरुषाः सत्यमेव हेम सुवर्ण मधिगत्य प्राप्य किमु त्यजंति ? अपि तु न त्यजंति गृह्णंत्येव ६२

आर्यरक्षितनी पेठे अन्यशास्त्रनो अभ्यास करीने विद्वान् थयेलो थयो पण पुरुष, जण लोकने हितकारी पथा ज्ञाननो फरी अभ्यास करे छे. दृष्टांत कहे छे के, जे पुरुषोए सुवर्ण सरखा काचना ककडाने सुवर्ण मान्युं छे, तेओ साचा सुवर्णने प्राप्त कर्या पछी शुं तेने त्यजीदे खरा ? अर्थात् न त्यजी दे. ॥ ६२ ॥

( मालिनीवृत्तम्. )

पठ पठति यतस्वान्नादिना लेखय स्वैः,
स्मर वितर च साधौ ज्ञानमेतद्धि तत्वम् ॥
श्रुतलवमपि पुत्रे पश्य शय्यंभवोऽदा-
ज्जगति हि न सुधायाः पानतः पेयमन्यत् ६३

पठेति । पठ ज्ञानं ज्ञानं भण । पठति पुरुषेऽन्नादिना भोजनादिना यतस्व यत्नं कुरु । स्वैर्द्रव्यैर्लेखय ज्ञानं । ज्ञानं स्मर

स्मरणं कुरु । च साधौ मुनौ ज्ञानं वितर विस्तारय । हि निश्चितं एतत्तत्त्वं । पश्य विलोकय । शय्यंभवः पुत्रे मणके श्रुतलवमपि अदात् ददौ । दृष्टांतमाह । हि यस्मात्सुधायाः पानतः अमृतपानतः जगति अन्यत् पेयं न नास्ति ॥ ६३ ॥

तमे पोते ज्ञाननो अभ्यास करो अने अभ्यास करनाराओने भ-क्तादिकवडे सहाय करो. द्रव्यथी ज्ञान लखावो, ते ज्ञाननुं स्मरण करो अने ते साधुओने आपो. कारण के, एज तत्त्व छे. जुओ, श-य्यंभव मुनिये पोताना पुत्र मणकने अल्प ज्ञान पण आप्युं. दृष्टांत कहे छे के, आ जगत्मां अमृतना पानथी बीजुं कांइ अधिक पान करवा लायक नथी. ॥ ६३ ॥

हवे बे काव्यथी संघद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

लोकेभ्यो नृपतिस्ततोऽपि हि वरश्चक्री ततो वासवः,
सर्वेभ्योऽपि जिनेश्वरः समधिको विश्वत्रयीनायकः॥
सोऽपि ज्ञानमहोदधिः प्रतिदिनं संघं नमस्यत्यहो,
वैरस्वामिवदुन्नतिं नयति तं यः स प्रशस्यः क्षितौ ६४

लोकेभ्य इति । लोकभ्यो नृपतिर्वरः श्रेष्ठः ततोऽपि नृपतिभ्योऽपि हि चक्री वरः प्रधानः ततश्चक्रवर्तिभ्यो वासव इंद्रो वरः प्रधानः सर्वेभ्योऽपि जिनेश्वरः समधिकः उत्कृष्टतरः । कथंभूतः जिनेश्वरः । विश्वत्रयनायकः लोकत्रयाधिश्वरः । सोऽपि सर्वज्ञो

ज्ञानमहोदधिर्ज्ञानसमुद्रः प्रतिदिनमहर्निशं संघं चतुर्विधं अहो इ-त्याश्चर्ये नमस्यति नमस्करोति । यः पुरुषो वैरस्वामिवत्तं संघं उन्नतिं नयति स पुरुषः क्षितौ पृथिव्यां प्रशस्यो वर्णनीयः ॥६४॥

सर्वे लोकोथी राजा श्रेष्ट छे, राजाथी चक्रवर्ती अने चक्रवर्तीथी इंद्र श्रेष्ट छे. वली ए सर्वेथी पण जगत्‌ना नायक एवा जिनेश्वर श्रेष्ट छे. आश्चर्य छे के, ज्ञानना महासागर ते जिनेश्वर पण श्री संघने प्रतिदिन नमस्कार करे छे; माटे ते संघने जे पुरुष वैर स्वामीनी पेठे उन्नति पमाडे छे, तेने धन्य छे. ॥ ६४ ॥

कोऽप्यन्यो महिमास्त्यहो भगवतः संघस्य यस्य स्फुर-
त्कायोत्सर्गबलेन शासनसुरी सीमंधरस्वामिनम् ॥
नित्वा तत्कृतदोषशुद्धिमुदितां यक्षार्यिकां चानयत्,
किं चैतन्ननु तत्प्रभावविभवैस्तीर्थंकरत्वं भवेत् ॥६५॥

कोऽप्यन्य इति । भगवतः संघस्य कोऽप्यन्यो महिमा प्रभावोऽस्ति । अहो इत्याश्चर्ये यस्य संघस्य स्फुरत्कायोत्सर्गबलेन शासनसुरी शासनदेवता यक्षार्यिकां यक्षासाध्वीं श्री सिमंधरस्वामिनं नीत्वा च पुनः पश्चादानयत् ॥ किंभूतां यक्षार्यिकां । तत्कृतदोषशुद्धिमुदितां तेन कृतया सीमंधरस्वामिना कृतया दोषशुद्ध्या दोषाभावेन मुदितां हृष्टां । च पुनरेतत् किं । ननु निश्चिते तत्प्रभावविभवैः संघप्रभावमहिमाभिः तीर्थंकरत्वं जिनत्वं भवेद् स्यात्.

अहो! ए समर्थ एवा संघनो कोइ नवीनज महिमा देखाय छे! कारण के, ए संघना कायोत्सर्ग बले करीने शासनदेवी यक्षा

साध्वीने श्रीसीमंधर स्वामी पासे लेइ गइ अने त्यां सीमंधरस्वामीए तेनी ( यक्षासाध्वीनी ) करेली दोष शुद्धिथी हर्ष पामेली ते यक्षासाध्वीने पाछी लइ आवी. माटे खरेखर ए संघना आवा प्रभावना विगयथी तीर्थंकरपणुं थाय छे. ॥ ६५ ॥

हवे ये काव्यथी साधुद्वार कहे छे.

( मालिनीवृत्तम् )

भवति हि भवपारः शुद्धया साधुभक्त्या,
धनगृहपतिजीवानंदवैद्येशवत् प्राक् ॥
पृथुरपि हि पयोधिस्तीर्यते चारुतर्या,
तिमिरतरभृतोऽध्वा दीप्रया दीपयष्ट्या ॥६६॥

भवतीति । शुद्धया निर्मलया साधुभक्त्या मुनिसेवया हि निश्चितं भवपारो भवति संसारसमुद्रतरणं स्यात् । किंवत् । प्राक् पूर्वं धनगृहपतिजीवानंदवैद्येशवत् धननामा गृहपति श्रेष्ठी जीवानंदनामा च वैद्येशो वैद्यराज स्तयोर्द्वयोः पूर्वजन्मनि मुनिरोगनिराकरणरूपया भक्त्या भवपारोऽभूत् । दृष्टांतावाह । पृथुरपि विस्तीर्णोऽपि पयोधिः समुद्रः चारुतर्या प्रधाननौविशेषेण तीर्यते पारः प्राप्यते । दीप्रया देदीप्यमानया दीपयष्ट्याऽध्वा तीर्यते । किंभूतोऽध्वा । तिमिरतरभृतः अंधकारसमुहपूर्णः ॥ ६६ ॥

शुद्ध साधुभक्तिथी, धनसार्थवाहनी पेठे तथा जीवानंद वैद्यनी पेठे, संसारनो पार पमाय छे. बे दृष्टांतो कहे छे के, म्होटो पयो

पण समुद्र मनोहर वहाणथी तराय छे अने प्रकाशीत थवा दीवाए करीने अंधकारमय रस्ते जइ शकाय छे. ॥ ६६ ॥

( शार्दूलविक्रीडितवृत्तम्. )

दानैः प्रासुकअन्नपानवसनावासौषधानां मुने–
वैयावृत्यकृतेश्च विस्मयकरा भोगा बलं चाप्यते ॥
श्रीमद्बाहुसुबाहुवत्परभवे सा कामगव्यप्यहो,
सच्चारीजलदानकोमलकरस्पर्शैरलं तुष्यति ॥६७॥

दानैरिति। मुनेः साधोः प्रासुकभक्तपानवसनावासौषधानां निर्दोषभक्तपानवस्त्रनिवासभेषजानां दानैर्वितरणैः कृत्वा भोगाः प्राप्यते। कथंभूताः भोगाः। विस्मयकराः आश्चर्यकारकाः ॥ च पुनः मुनेः साधोः वैयावृत्यकृतेः सेवाकरणात् बलं प्राप्यते । किंवत् । परभवे श्री बाहुसुबाहुवत् । यथा पश्चाद्भवे श्री बाहुः प्रासुकभक्तपानवसनवासौषधानां दानैः कृत्वा भरतचक्रवर्त्तिभवे चक्रवर्त्तिभोगान् लेभे । सुबाहुश्च मुनेर्वैयावृत्यं विश्रामणादिकं चक्रे तेन स पश्चात् बाहुबलिभवे तादृशं बलं लेभे । येन बलेन भरतचक्रवर्त्तिनमपि जिगाय । दृष्टांतमाह । अहो इत्याश्चर्ये सा कामगव्यपि अत्यतिशयेन तुष्यति हृष्टा भवति । कैः कृत्वा हृष्टा भवतीत्याह । सच्चारीजलदानकोमलकरस्पर्शैः प्रधानतृणपानीयदानमृदुकोमलहस्त कंडुयनैः । एतैः प्रकारैः तुष्यति ॥ ६७ ॥

प्रासुक अन्नपाणी, वस्त्र, निवास अने औषध ए सर्व मुनिने

देवाथी तथा तेमनो वैयावच्च करवाथी, बाहु अने सुबाहुनी पेठे परभवने विषे विस्मयकारक भोग अने बल प्राप्त थाय छे. दृष्टांत कहे छे के, कामधेनु सारो चारो, जलपान अने कोमल हस्तना स्पर्शथी बहु संतुष्ट थाय छे. ॥ ६७ ॥

हवे बे काव्यथी साध्वीद्वार कहे छे.

धर्मः पुंप्रभवो यदेतदिदमेवार्यापि पूज्या पुन-
र्यस्या धर्मसद्भवा गुरुजनेष्वप्युन्नतिर्यत्पुरा ॥
सौनेदयनृपेऽम्बिकासुतगुरो श्रीचंदनायां न किं,
ब्राह्मी पुण्यवतीसुता किल मृगावत्यप्यभून्मुक्तये६८

धर्मेरिति । धर्मः पुंप्रभवः पुंसः पुरुषात् प्रभवतीति पुंप्रभवः पुरुषोत्पाद्यः । यत् एवं एतद्वचनं इदमं इदमेव सत्यंवचनं । पुनस्तथापि आर्यापि महासत्यपि पूज्यैव । यस्या आर्याया धर्मसमुद्भवा पुण्योत्पन्ना उन्नतिः स्यात् । केषु । गुरुजनेषु । यत् यस्मात् पुरा पूर्वं ब्राह्मी श्री ऋषभपुत्री सुनंदाया अपत्यं सौनंदेयो बाहुबलिः स चासौ नृपश्च तस्मिन् बाहुबली मुक्तये सिद्धिहेतयेऽभूत् । पुण्यवतीसुता पुष्पचूला समासती अम्बिकासुतगुरो मुक्तयेऽभूत् । च पुनः किल निश्चयेन मृगावती श्री चंदनायां महासत्यां किं मुक्तये नाभूदिति । अपि तु मुक्तये बभूव ॥ ६८ ॥

'धर्म पुरुषकथी उत्पन्न थयेलो छे' एम कहे छे, ते सत्य छे, तोपण तपोधना-साध्वी स्त्री पण पूज्य छे. कारण के, धर्मथकी उत्पन्न थयेली एवी जे के स्त्रीनी उन्नति ते गुरुजनने विषे पण प्र-

ক্তিনে माटे थाय छे. जुओ! श्री ऋषभप्रभुनी पुत्री ब्राह्मी बाहुबलिनी मुक्तिने माटे थइ. तेमज पुष्पचूला अन्निकापुत्रनी मुक्तिने माटे थइ. वली मृगावती श्रीचंदनबालानी मुक्तिने माटे शुं नथी थइ? अर्थात् ते पण तेनी मुक्तिने माटेज थइ छे. ॥ ६८ ॥

किं पूज्या श्रमणी न सा श्रुतरसा दुर्बोधहृन्मोहहृत्,
मात्रासक्तकुबेरदत्तदयिता साध्वीव जातावधिः ॥
धन्या एव चिरंतना व्रतधना अप्याधुनिक्यः शुभा,
याकिन्या हरिभद्रवादिमुकुटः सोऽत्रोधिवाङ्गव्रतः ६९

किमिति। सा श्रमणी साध्वी किं पूज्या न अपि तु पूज्यैव। सा का। या श्रुतरसा भवति श्रुते सिद्धांते रस आदरो यस्या सा तथा। पुनः किंभूता। दुर्बोधहृत् कुत्सितज्ञानहर्त्री। मोहोऽज्ञानं तं हरतीति मोहहृत्। केव। मातरि आसक्तस्य कुबेरदत्तस्य दयिता कुबेरदत्तदयिता कुबेरदत्ता साध्वीव। यथा सा तस्य कुत्सितज्ञानहारिणी मोहहरी वाऽभूत्। किं भूता कुबेरदत्तदयिता। जातोऽवधिर्यस्या सा जातावधिः। चिरंतनाः प्राचिना। व्रत एव धनं यस्या सा व्रतधना महासत्यो धन्या एव। आधुनिक्योऽपि महासत्यः शुभा। दृष्टांतमाह। याकिन्या महत्तर्या हरिभद्रो नाम ब्राह्मणो वादींद्राणां मुकुटः श्रेष्टः सोऽबोधि प्रतिबोधितः। कस्मात् वाक्यव्रतः। "चक्किदुगं हरिपणगं चक्कियकेसवो चक्की" इत्यादि वचनमात्रतः पश्चाद्धरिभद्राचार्यो जातः ॥ ६९ ॥

माताने विषे आसक्त थया कुबेरदत्तनी स्त्री कुबेरदत्ता के जेने अवधिज्ञान उत्पन्न थयुं हतुं ते साध्वीनी पेठे शास्त्रमां प्रीतिवाली,

दुष्ट बोधने हरण करनारी अने अज्ञानने दूर करनारी साध्वी शुं पूज्य नथी? अर्थात् पूज्य छे. पूर्वकालनी साध्वीओने तो धन्य छे; परंतु आधुनिक कालनी साध्वीओ पण कल्याणकारी छे. जूओ याकिनी नामनी साध्वीये वादी शिरोमणी एवा हरिभद्रसूरिने केवल वचनमात्रे करीने बोध पमाडयो हतो. ॥ ६९ ॥

हवे ये काव्यथी श्रावकद्वार कहे छे.

( मालिनीवृत्तम् )

अकृत भरतचक्री विश्वसाधर्मिकार्चां,
कुरुत तदनुमानाच्छ्रेयसेऽत्रोद्यमं तत् ॥
यदि सकलधरित्रीं प्रीणयत्यंबुवाहः,
किमु न तदरघट्टः क्षेत्रमात्रं पृणातु ॥ ७० ॥

अकृतेति। यदि भरतचक्री विश्वसाधर्मिकार्चां जगत्साधर्मिकवात्सल्यं अकृत अकार्षीत्। तर्हि तदनुमानात् भरतानुमानात् अत्र साधर्मिकभक्तायां श्रेयसे पुण्याय उद्यमं प्रयत्नं कुरुत। ननु भरतचक्री नवनिधिचतुर्दशरत्नस्वामी देवतानां सामर्थ्येन सर्वं कर्तुं समर्थः परं तदनुसारेण श्रावका अपि साधर्मिवात्सल्यं कुर्वीत्येति कथं युक्तं सामर्थ्याभवात् इति शंकां निरस्यन्नत्र दृष्टांतमाह। अंबुवाहो मेघो यदि सकलधरित्रीं सकलपृथ्वीं प्रीणयति तोपयति तर्हि अरघट्टः क्षेत्रमात्रं किमु न पृणातु न तर्पयतु? अपि तु तर्पयतु। नवनिधिचतुर्दशरत्नस्वामी भरतचक्री मेघसदृशः श्रावका अरघट्टसदृशाः ॥ ७० ॥

जो के भरतचक्रवर्ती पण विश्वमां रहेला साधर्मिक भाइओनी पूजा सत्कार करता हता, तो पछी हे श्रावको ! तमे पण तेमना अनुमानथी पुण्यने माटे साधर्मिक प्रजा उपर उद्यम करो. आ ठेकाणे कोइ शंका करे के, भरततो नवनिधि अने चौदरत्नना स्वामी हता, तथा ते देवताना सामर्थ्यथी तेम करता, पण तेमना अनुमाननी थायकोप शीरीते करवुं ? ते शंकाने दृष्टांतथी नाश करता छता कहे छे के, मेघनुं जल जो सर्व पृथ्वीने तृप्त करे छे तो अरघट्ट ( रेहेंट ) फक्त एक क्षेत्रने शुं नथी तृप्त करतो ? अर्थात् भरत मेघ सरखा अने श्रावक रेहेंट सरखा जाणवा ॥ ७० ॥

( शार्दूलविक्रीडितवृत्तम्. )

श्राद्धानां सदुपासका बहुमता एवैकधर्मत्वतः,
साधूनामपि जातु गौरवपदं वीतस्पृहाणाममी ॥
रुग्नाशादुपसर्गहृत्स्तवनतः श्रीभद्रबाहोर्यथा,
चंद्रार्काब्दवदुत्तमेषु सहजं विश्वोपकारि व्रतम् ॥७१॥

श्राद्धानामिति । श्राद्धानां श्रावकाणां सदुपासकाः प्रधान श्रावका बहुमता बहुमान्या एव । कस्मात् । एकधर्मत्वतः एकः समानो धर्मो येषां ते एकधर्माणस्तेषां भाव एकधर्मत्वं तस्मात् एकधर्मत्वतः । जातु कदाचित् साधुनामपि मुनीनामपि अमी श्रावका गौरवपदं आदरस्थानं भवंति । किंभूतानां साधूनां । वीतस्पृहाणां वीता गता स्पृहा वांच्छा येषांते वीतस्पृहास्तेषां नीरागाणामित्यर्थः । कस्येव । श्री भद्रबाहोरिव । श्री भद्रबाहोर्यथा सदुपा-

सकाः श्रावकाः गौरवपदं आदरस्थानं अभूवन् । कस्मात् । उपसर्गहृत्स्तवनतः ' उवसग्गहरंपासं ' इतिस्तवनदानात् । किंभूतात् । रुग्नाशात् रुजां रोगाणां नाशो यस्मात् स रुग्नाशस्तस्मात् । ननु वीतस्पृहाः श्रावकान् कथं बहुमान्यंते । नैवं । उत्तमानां उपकारिस्वभावात् । दृष्टांतमाह । उत्तमेषु सत्पुरुषेषु सहजं स्वभाविकं विश्वोपकारि व्रतं समस्तोपकारकं व्रतं नियमो यस्मिन् कर्मणि यथा तथा । किंवत् । चंद्रार्काब्दवत् चंद्रसूर्यमेघवत् । यथा चंद्रसूर्यमेघेषु सहजं विश्वोपकारकं व्रतं भवति ॥ ७१ ॥

साधर्मिपणाने लीधे अति श्रेष्ठ उपासना करनारा श्रावको श्रावकोने तो बहुमान्य होय, परंतु तेओ कोइ वखत नीरागी एवा साधुओना पण भद्रबाहु स्वामीनी पेठे गौरवना स्थान रूप थाय छे. कोइ शंका करे के, रागरहित साधुओने श्रावको बहुमान्य करवा योग्य केम होय? त्यां समाधान करे छे के, उत्तम पुरुषोनो उपकारी स्वभावज होय छे. दृष्टांत कहे छे के, उत्तम पुरुषमां चंद्र, सूर्य अने मेघ विगेरेनी पेठे सर्व उपर उपकार करवानुं स्वाभाविक व्रत होय छे. ॥ ७१ ॥

हवे बे काव्यथी श्राविकाद्वार कहे छे.

स्त्री पुंसोप्यधिका त्रिपक्षविशदा पुंरत्नखानिर्यतः,
स्वामिन्या मरुदेवया तु सदृशी भूता न भाविन्यपि ॥
विश्वार्यौ जिनचक्रिणौ प्रथमतो यत्पुत्रपौत्रावहो,
या प्रागेव शुभेक्ष्यभूच्छिवपुरप्रस्थानकस्था प्रभोः॥७२॥

स्त्रीपुंसेति । स्त्री-नारी पुंसोऽपि पुरुषादपि अधिका उत्कृष्टा ।

किंभूता स्त्री । त्रिपक्षविपदा त्रिपक्षैर्मातृपितृश्वसुरपक्षरूपैर्निर्मला यतो यस्माद्धेतोः पुंरत्नखानिः पुरुषरत्ननिधानरूपा । अतोऽधिका पुरुषात् । तु पुनर्मरुदेवया स्वामिन्या सदृशी तुल्या न भूता न जाता न भाविन्यपि न भविष्यति निश्चयेन । यत्पुत्रपौत्रौ यस्या मरुदेवायाः पुत्रपौत्रौ अहो इत्याश्चर्ये विश्वार्यौ त्रैलोक्यपूज्यौ जिनचक्रिणौ अर्हच्चक्रवर्त्तिनौ प्रथमतः पूर्वं अभूतां । या मरुदेवा प्रभोः श्री आदिनाथस्य प्रागेव पूर्वमेव शुभेह्नि शुभदिवसे शिवपुरप्रस्थानकस्थामोक्षनगरप्रस्थानवर्त्तमानाभूज्जाता ॥ ७२ ॥

पितृपक्ष, मातृपक्ष अने श्वसुरपक्ष एम त्रणे पक्षे निर्मल एवी स्त्री, पुरुषथकी पण अधिक छे. कारण के, ते पुरुषरूप रत्ननी खाण छे. वली मरुदेवी माता समान तो कोइ स्त्री थइ नथी अने थवानी पण नथी. कारण के, तेमना पुत्र ऋषभदेव अने पौत्र (पुत्रनो पुत्र) भरत सर्व विश्वने विषे पूज्य तीर्थंकर तथा चक्रवर्ती थया छे. वली जे मरुदेवी माता पोते श्री आदिनाथ प्रभुनी पहेलाज शिवपुरप्रत्ये प्रस्थान करनारा थया. ॥ ७२ ॥

(वसंततिलकावृत्तम्.)

या श्राविकाप्यमलशीलपवित्रितांगी,
सा श्लाघ्यते त्रिभुवनेऽपि यथा सुभद्रा ॥
यस्यास्त्रिवारिचुलकादितलोकतुष्टेः,
स्रोतःसहस्रकृतमुत् सदृशी क गंगा ॥ ७३ ॥

येति । या अमलं च तच्छीलव्रतं च अमलशीलव्रतं, निर्मल-

शीलव्रतं तेन पवित्रितं पवित्रीकृतं अंगं यया सा श्राविकापि सती सा स्त्री त्रिभुवने लोकत्रये श्लाघ्यते वर्ण्यते । केव। यथा सुभद्रा। यस्याः सुभद्रायाः सदृशी गंगा क्व। किंरूपा गंगा । स्रोतःसहस्रेण प्रवाहसहस्रेण कृता मुद् हर्षो यया सा तथा। किंरूपायाः सुभद्रायाः । त्रिभिर्वारिचुलकैर्जलांजलिभिराहिता आरोपिता कृता लोकानां तुष्टिः यया सा तथा ॥ ७३ ॥

निर्मल शीलवडे पवित्र छे अंग जेनुं एवी श्राविका पण सुभद्रानी पेठे त्रण भुवनने विषे प्रशंसा पामे छे. दृष्टांत कहे छे के, हजारो प्रवाहोवडे हर्ष करनारी गंगा, फक्त त्रण अंजलीथी लोकोने संतुष्ट करनारी सुभद्राना समानपणाने क्यांथी पामे? ॥७३॥

हवे ये काव्यथी पूजाद्वार कहे छे.

पुष्पाक्षतांबुफलचंदनदीपधूप—
नैवेद्यतः प्रतिदिनं जिनपादपूजा॥
श्री श्रेणिकादिजनवज्जिनतादि दत्ते,
चक्रादयः कलशतामिवमृद्दलस्य ॥ ७४ ॥

पुष्पेति । पुष्पं १ अक्षताः २ अंबु ३ फलं ४ चंदनं ५ दीपः ६ धूप ७ नैवेद्यतः ८ इत्येतैः कृता प्रतिदिनं नित्यं जिनपादपूजा जिनेश्वरचरणसेवा श्री श्रेणिकादिजनवच्छ्रेणिकनृपादिमनुजवज्जिनतादि तीर्थंकरत्वादिकं दत्ते । कस्येव के कां दत्ते । चक्रादयः

( मालिनीवृत्तम्. )

मनसि वसति शश्वन्न्याय एवोत्तमानां,
यदमरवरलब्ध्या पारदारिक्यचौर्ये ॥
अनुविषयमरौत्सीच्चक्रभृद्ब्रह्मदत्तः,
क्व सुरसरिति पंकः केशचंद्रे कलंकः ॥ ७७ ॥

मनसीति । उत्तमानां श्रेष्ठपुरुषाणां मनसि शश्वन्निरंतरं न्याय एव वसति । यदस्मात् कारणात् ब्रह्मदत्तश्चक्रभृत् अमरवरलब्ध्या देवप्रसादप्राप्त्या पारदारिक्यं च चौर्यं च पारदारिक्यचौर्ये परस्त्रीलंपटताचौर्ये अनुविषयं अनुदेशं अरौत्सीदुरुरोध निवारयामास । दृष्टांतावाह । सुरसरिति गंगानद्यां पंकः क्व । अपि तु गंगायां कर्दमो न स्यात् । ईशचंद्रे ईश्वरमस्तकस्थितचंद्रे कलंको लांछनं क्व । अपि तु न स्यात् ॥ ७७ ॥

उत्तम पुरुषोनां मनने विषे निरंतर न्यायज वसे छे. कारण के, ब्रह्मदत्त चक्रवर्तीए पण पोताना प्रत्येक देशमां देवतानां वरदानथी परदारागमन अने चोरी ए बंने कार्यने निवारण कर्युं हतुं. दृष्टांत कहे छे के, स्वर्गगंगाना जलने विषे कादव क्यांथी होय? अने शंकरना मस्तक उपर रहेला चंद्रने विषे कलंक क्यांथी होय? ७७

( वसंततिलकावृत्तम्. )

विद्याविभूतिमहिमव्रतधर्ममोक्ष–
संपत्तये विनय एव विभुः किमन्यैः ॥

किं किं नमिः सविनमिर्जिनतो न लेभे,
पूज्यांघ्रिरेणुरपि पश्य नमस्य एव ॥ ७८ ॥

विद्येति[१]। विद्याविभूतिमहिमव्रतधर्ममोक्षसंपच्चये ज्ञानलक्ष्मीप्रभावनियमपुण्यनिश्रेयसानां संप्राप्तये विनय एव विभुः समर्थः। अन्यैः प्रकारैः किं। विनय एव कार्यः। दृष्टांतमाह। नमिः सविनमिः विनमिसहितः विनयतत्परः सन् जिनतः श्री आदिनाथतः किं किं न लेभे। अपि तु राज्यादिकं सर्व प्राप्तवान्। पश्य विलोकय। पूज्यांघ्रिरेणुरपि नमस्य एव गुरुजनपादधूलिरपि नमस्करणीया. ७८

विद्या, समृद्धि, यश, व्रत, धर्म अने कल्याण एटलायाना मेळववाने विनयज समर्थ छे. बीजी वस्तुओए करीने शुं? दृष्टांत कहे छे के, विनयमां तत्पर एवा विनमि सहित नमिए श्रीआदिनाथ प्रभुपासेथी शुं शुं मेळव्युं नथी? जुओ! पूज्यना चरणनी रज पण नमन करवा योग्य छे. ॥ ७८ ॥

( शार्दूलविक्रीडितम्. )

किं मर्त्यस्त्रिदशोऽप्यपास्तविनयो म्लानेः सद्मानेः पदं,
यक्षो वृद्धकरः किमार्यखपटाचार्येण नाशिक्षितः ॥
किं वा विष्णुकुमारतो न नमुचिर्मृत्वाऽगमद्दुर्गतिं,
नद्योघस्तरुमुन्नतं रुजति वा नम्रं तु नो वेतसम् ॥ ७९ ॥

किमिति। निर्बलत्वान्मर्त्यः किं मनुष्यः किं। सबलास्तु

दशोऽपि देवोऽपि अपास्तविनयः त्यक्तविनयगुणः सन् सद्यः हानिः हानिसहितायाः म्लानेः पराभवस्य पदं स्थानं स्यात् । आर्यखपटाचार्येण वृद्धकरनामा यक्षः किं नाशिक्षितः । अपि तु शिक्षित एव । वा अथवा नमुचिः प्रधानो विष्णुकुमारनामतो मुनितो मृत्वा प्राणांस्त्यक्त्वा दुर्गतिं नरकं किं नागमत् न जगाम अपि तु जगाम। दृष्टांतमाह । नद्योघः नदीप्रवाह उन्नतं तरुं वृक्षं रुजति पातयति वा पुनः नम्रं वेतसं वेतसनामानं वृक्षं नो रुजति न पातयति. ७९

निर्बल माणसनी तो वातज शी करवी; परंतु बलवंत पण देवता पण विनयने त्यजीदेवाथी हानिसहित पराभव पामे छे. शुं (अविनयथी) वृद्धकर नामना यक्षने आर्यखपटाचार्ये शिक्षा नथी करी? अथवा तो नमुचि प्रधान, विष्णुकुमारथी मृत्यु पामीने दुर्गतिप्रत्ये नथी गयो? दृष्टांत कहे छे के, नदीना जलनो प्रवाह ऊंचा पण वृक्षने पाडी नाखे छे अने नम्र पण नेतरना वृक्षने उखाडी नाखतो नथी. ॥ ७९ ॥

हवे बे काव्यथी वैराग्यद्वार कहे छे.

राज्यं शक्रकृताभिषेचनमहो रूपं त्रिलोकेऽप्यस–<br>त्सारूप्यं च सनत्कुमारनृपतेः सोऽप्यंगवैराग्यतः॥<br>चक्रे चारुतपः सलब्धिरपि तत् स्वं नाचिकित्सत्पुना,<br>रज्येद्वा प्रतिकर्मनिर्मलरुचौ कः कुप्यपात्रे सुधीः ॥८०॥

राज्यमिति । सनत्कुमारनृपतेः सनत्कुमारनाम्नश्चतुर्थचक्रवर्तिनो राज्यं शक्र इंद्रस्तेन कृतं अभिषेचनं पट्टाभिषेको यत्र तत्

एवंविधमासीत् । अहो इत्याश्चर्ये रूपं एवंविधं बभूव । त्रिलोकेऽपि असत्सारूप्यं असदविद्यमानं सारूप्यं सादृश्यं यस्य तत् । सोऽपि सनत्कुमारचक्रवर्ती अंगवैराग्यतः शरीरविरागतश्चारुतपः प्रधानतपश्चक्रे चकार । पुनर्भूयोऽपि स चक्रवर्ती सनत्कुमारो मुनिः सलब्धिरपि लब्धिमानपि सत् स्वं स्वकीयं अंगं न अचिकित्सत् चिकित्सां न कारयामास ॥ दृष्टांतमाह । कः सुधीः विद्वान् पुरुषः प्रतिकर्मणा उद्वर्तनेन निर्मला कांतिर्यस्य स तथा एवंविधे कुप्यपात्रे रज्येत् रागं कुर्यात् । अपि तु न कोऽपि ॥ ८० ॥

इंद्रे अभिषेक करेलुं राज्य अने त्रण लोकने विषे असमान एवुं रूप ए बन्ने जेने हतां एवा सनत्कुमार चक्रवर्तीए पण शरीर उपर वैराग्य उत्पन्न थवाथी महातप कर्युं. वली तेज मुनिए लब्धि छतां पण शरीरनी चिकित्सा करी नहीं. दृष्टांत कहे छे के, मांजवाथी उज्वल थयेला पीतलना पात्रने विषे कयो डाह्यो पुरुष आसक्त थाय? अर्थात् कोइ थाय नहीं. ॥ ८० ॥

आजन्मांतमनंतदुर्मतिभवे वैराग्यमस्त्येव त-
द्व्यक्तं हेतुषु सत्सु किं तु भवति प्रत्येकबुद्धेष्विव ॥
सूर्यास्यन्यनलं पयः शशिमणौ स्वर्णं सुवर्णावनौ,
कोऽद्राक्षीत् पुनरर्कचंद्रहुतभुग्योगात्कुतोऽप्येति वा ॥८१॥

आजन्मांतमिति । अनंता दुर्मतिर्दुष्टबुद्धिर्यत्र स अनंतदुर्मतिः सचासौ भवश्च तस्मिन् संसारे आजन्मांतं उत्पत्तिमारभ्य मरणं यावत् जीवानां वैराग्यमस्त्येव । किंतु परंतु हेतुषु कारणेषु सत्सु तद्वैराग्यं

व्यक्तं प्रकटं भवति । केषु इव । प्रत्येक बुद्धेष्विव । यथा करकंडूवादिषु चतुर्षु प्रत्येकबुद्धेषु हेतुषु वृषभादिकारणेषु विद्यमानेषु वैराग्यं व्यक्तं बभूव ॥ दृष्टांतानाह ॥ को नरः सूर्यरश्मिनि सूर्यकांतौ अनलं वैश्वानरमद्राक्षीत् । अपि तु न कोऽपि ददर्श । पुनरर्क संयोगादग्निः कुतःस्थानादेति आगच्छति ।शशिमणौ चंद्रकांतमणौ पयः सुधां कोऽद्राक्षीत् अपितु न कोऽपि । पुनश्चंद्रयोगात्पयः कुतोऽप्यागच्छति ।सुवर्णावनौ स्वर्णं कोऽद्राक्षीत् न कोऽपि। पुनरग्निसंयोगात्स्वर्णं कुतोऽप्यागच्छति ।॥ ८१ ॥

जन्मथी आरंभीने मृत्यु पर्यंत अनंतदुःखथी भरेला एवा आ संसारने विषे वैराग्य तो छे; परंतु ते वैराग्य चार प्रत्येक बुद्धने प्रगट थयो तेम हेतु प्राप्त थये छते सर्वने प्रगट थाय छे. दृष्टांत कहेछे के, सूर्यकांत मणिने विषे अग्नि, चंद्रकांत मणिने विषे जल अने सुवर्ण पृथ्वीने विषे सुवर्ण ए सर्व कोइए जोया छे ? ए तो सूर्य, चंद्र अने अग्निना योगने लीधेज कोइ स्थानकथी आवे छे. ॥ ८१ ॥

हवे बे काव्यथी दानद्वार कहेछे.

( स्रग्धरावृत्तम्. )

सुप्रापं शुद्धपात्रं धनमपि विपदं किं तु निःपुण्यकानां,
नो चित्तं पात्रदानं प्रति भवति मतिर्यत्र शुद्धाशनाद्यैः ॥
आद्योऽर्हन् वर्षमेकं प्रतिदिनमगमच्छुद्धभैक्षेऽपि देशे,
श्रेयांसस्त्वेक आद्यं सुकृतिषु कृतवान् स्वं प्रभोःपारणेन।

सुप्रापमिति ॥ शुद्धपात्रं निर्मलपात्रं सुप्रापं सुखलभ्यं । विपदं

धनमपि सुमापं सुलभं । किंतु निःपुण्यकानां पुण्यरहितानां पात्रदानं प्रति चित्तं मनो नो भवति । यत्र चित्ते शुद्धाशनाद्यैः निर्दोषान्नादिभिः कृत्वा मतिः स्यात् । तादृशं चित्तं पात्रदानं प्रति न स्यात् । दृष्टांतमाह । आद्योऽर्हन् श्रीआदिनाथः एकं वर्षं यावत् प्रतिदिनं शुद्धभैक्षेऽपि देशे प्रचुरनिष्पन्नधान्यादौ देशमध्येऽगमज्जगाम । तु पुनः श्रेयांसः श्रेयांसकुमारः एक स्वमात्मानं सुकृतिषु पुण्यवत्सु आद्यं प्रथमं कृतवान् अकार्षीत् । केन कृत्वा । प्रभोः श्रीआदिनाथस्य पारणेन ॥ ८२ ॥

शुद्ध पात्र मळे, धन पण शुद्ध होय; छतां पुण्यरहित जनोनुं चित्त पात्रदान प्रत्ये थतुं नथी के, जे चित्तने विषे शुद्ध पवा अन्दान, पान, खादिम, स्वादिम विगेरेनी बुद्धि होय. दृष्टांत कहेछे के, प्रथम तीर्थंकर श्री ऋषभदेव शुद्ध एवा अन्नथी भरपूर एवा देशमां विषे एक वर्षपर्यंत प्रतिदिवस विचर्या छतां पण फक्त एक श्रेयांस कुमारेज प्रभुने पारणुं करावीने पुण्यवंत पुरुषोनी मध्ये पोताना आत्माने अग्रेसर कर्यो. ॥ ८२ ॥

( मालिनीवृत्तम्. )

यदपि तदपि शुद्धं चंदनावत्प्रदत्तं,
झटिति फलति पात्रेऽन्यत्र नो चार्यपि स्वम् ॥
जलधिजलमसारं वारिवाहेऽमृतीस्यात् ,
मधुरमपि हि दुग्धं पन्नगास्ये विषं स्यात् ॥ ८३॥

यदपीति । यदपि तदपि यादृशमपि तादृशमपि शुद्धं अन्ना

दिकं पात्रे शुद्धपात्रे प्रदत्तं सत् चंदनावत् चंदनाया इव झटिति शीघ्रं फलति सफलीभवति। अन्यत्र पात्रादन्यत्रस्थानेऽपात्रे सार्वपि मनोहरमपि स्वं द्रव्यं दत्तं सन्नो न फलति। अत्र दृष्टांतद्वयमाह। हि असारं साररहितं जलधिजलं समुद्रपानीयं वारिवाहे मेघे अमृतीस्यात् सुधारूपं भवति। मधुरमपि आस्वाद्यमपि दुग्धं पन्नगास्ये सर्पमुखे विषं स्यात् ॥ ८३ ॥

जेवुं तेवुं पण शुद्ध अन्नादिक जो पात्रने विषे आप्युं होय तो ते चंदनबालाने फल्युं तेम तत्काल फले छे; पण अपात्रने विषे आपेलुं सारुं द्रव्य फलतुं नथी, पण विपरीत रूपे परणमे छे. दृष्टांत कहे छे के, खारुं एवुं पण समुद्रनुं जल मेघने विषे अमृत समान थाय छे अने मधुर एवुं पण दुध सर्पना मुखने विषे विष थाय छे. ॥ ८३ ॥

हवे बे काव्यथी शीलद्वार कहे छे.

( वसंततिलकावृत्तम्. )

स्त्रीविभ्रमैश्चलति लोलमना न धीरः,
श्रीस्थूलभद्र इव तादृशसंकटेऽपि ॥
चूर्णीभवेद्दृषदयोऽपि विलियते च,
वैडुर्यमेति विकृतिं ज्वलनात्पुनर्न ॥ ८४ ॥

। स्त्रीविभ्रमैरिति । लोलमनाश्चपलचित्तः पुरुषः स्त्रीविभ्रमैः स्त्रीणां हितभावैश्चलति चपलचित्तो भवति। धीरो न न चलतीत्यर्थः क इव। तादृशसंकटेऽपि कोशाविश्याहावभावेऽपि श्री स्थू-

लभद्र इव । यथा स्थूलभद्रो धीरत्वान्न चलतिस्म । चलधीरयोर्दृष्टांतावाह । दृषद् पाषाणः ज्वलनादग्नेः चूर्णीभवेत् चूर्णतां यातीत्यर्थः । अयोऽपि लोहमपि ज्वलनाद्विलीयते द्रवीभवति । पुनर्वैडूर्यं वैडूर्यमणिः ज्वलनाद्विकृतिं विकारं न गच्छति न प्राप्नोति ॥ ८४ ॥

चंचल मनवालो पुरुषज स्त्रीना कटाक्षथी चले छे; परंतु स्थूलभद्र जेवो धीर पुरुष तेवा तेना कोशाये करेला महा संकटोने विषे पण चलतो नथी. दृष्टांत कहे छे के, अग्नि थकी पाषाण चूर्ण थाय छे, लोढुं गली जाय छे; परंतु वैडूर्य रत्न विकार पामतुं नथी. ॥८४॥

सद्रूपयौवनगुणागतसानुराग-
विचेशदत्ततनयानयनेष्वभेदात् ॥
वज्रेण वज्रमुनिना स्वयशोर्णसाऽसत्-
संगाशुचि क्वचिदपूयत शीलमेव ॥ ८५ ॥

सद्रूपेति । वज्रमुनिना स्वयशोर्णसा स्वकीयकीर्तिजलेन कृत्वा क्वचित् क्वापिस्थाने प्रत्युत शीलमेव अपूयत पवित्रीचक्रे । पवित्रीकरणे हेतुमाह । असत्संगाशुचि असतां कुशीलानां संगः असत्संगः नीचसंगः तेन अशुचि अपवित्रं । किं रूपेण वज्रमुनिना । वज्रेण वज्रवदभेद्येन । कस्मादभेद्येन । सत् प्रधानं रूपं यस्याःसा सद्रूपा रूपवतीत्यर्थः । यौवनगुणेन लावण्यादिगुणेन आगता समीपमागता । सानुरागा प्रेमवती । एतादृशी विचेशदत्ततनया विचेशस्य दत्तनाम्नः श्रेष्ठिनः पुत्री । सद्रूपा चासौ यौवनगुणागता

च मानुरागा चासौ विचेशदचतनया चेति कर्मधारयः समासः। तस्या नयनान्येव इषवो वाणास्तामिरभेदात् अवेधनात् वज्रेण वज्ररूपेण। यथा वज्रं वाणैर्न भिद्यते ॥ ८५ ॥

सारा रूपवाली, यौवनना गुणथी समीप आवेली अने प्रेमवाली धनदत्त शेठनी कन्याना कटाक्षोथी नहिं भेदाता वज्र समान यज्र मुनिए असत्पुरुषोना संगथी अपवित्र थयेला शीलने पोताना यशरूपी जलथी पवित्र कर्युं. ॥ ८५ ॥

हवे ये काव्यथी तपोद्वार कहे छे.

( पृथ्वीवृत्तम्. )

तपः शिवकुमारवच्चरति मंदिरस्थोऽपि यः
स देवपरिषद्यपि द्युतिमहत्त्वविस्फूर्तिभृत् ॥
कृशान्वकृशतापनोल्लसितवर्णकं कांचनं,
न धातुषु विशिष्टतां नृपतिमौलितामेति च ॥८६॥

तपसिति। यः पुरुषः मंदिरस्थोऽपि गृहे वर्तमानोऽपि शिवकुमारवत्तपश्चरति तपः करोति। सः पुरुषो देवपरिषद्यपि देवसभायामपि द्युतिमहत्त्वविस्फूर्तिभृत् द्युतिः कांतिः। महत्त्वं ख्यातिः। स्फूर्तिः मूर्तेरुत्कटता। ता बिभर्तीति। दृष्टांतमाह। कांचनं धातुषु विशिष्टतां प्रधानतां न याति अपि तु यात्येव। च पुनः नृपतेर्मौलितां न एति न याति अपि तु राजमुकुटतां गच्छति। कीदृशं कांचनं। कृशानुरग्निस्तस्य अकृशतापनः महातापस्तेन उल्लसितवर्णकं प्रकाशितवर्णो यस्य तत् ॥ ८६ ॥

जे पुरुष शिवकुमारनी पेठे पोताना मंदिरने विषे रह्यो छतो पण तपश्चर्या करे छे, ते देव सभामां तेजने, महत्त्वने अने उत्तम मूर्तिने धारण करनारो थाय छे. दृष्टांत कहे छे के, अग्निना अत्यंत तापथी प्रकाशित छे वर्ण जेनो एवुं सुवर्ण सर्व धातुओमां शिरोमणिपणाने अने राजाना मुकुटपणाने शुं नथी पामतुं ? अर्थात् पामेछे.

तपः सकलकर्मभिद्विविधलब्धिकृन्निश्चितं,
गृहे पुरि च दुर्भगोऽप्यहह नंदिषेणो द्विजः ॥
व्रते शमतपःपरः सुरनरैकवंद्योऽभव-
द्रविज्वलनतापितः श्रयति दीप्तिमामो घटः॥८७॥

तपसिति ॥ तपो द्वादशविधं सकलकर्मभिद् समग्रकर्मभेदकं निश्चितं निश्चयेन विविधलब्धिकृत् नानालब्धिकारकं च भवति । अहहेति खेदे । नंदिषेणो नाम द्विजो ब्राह्मणः गृहे पुरि नगरे च दुर्भगोऽपिदौर्भाग्ययानपि व्रते शमतपःपरः सन् सुरनरैकवंद्यः देवमनुष्याणां एक एव वंद्यो वंदनीयोऽभवत् बभूव । दृष्टांतमाह । आमोऽपक्वः कच्च इति यावत् एवंविधो घटः कुंभः रविः सूर्यः ज्वलनो वैश्वानरस्ताभ्यां तापितः सन् दीप्तिं कांतिमाश्रयति ॥८७॥

निश्चे तपश्चर्या सकल कर्मने भेदनारी अने विविधलब्धि करनारी छे. जूओ घरने विषे तेमज नगरने विषे दुर्भागी एवो पण नंदिषेण ब्राह्मण व्रतने विषे, शमताने विषे तथा तपश्चर्याने विषे तत्पर थयो छतो मनुष्यने तथा देवताने वंदन करवा योग्य थयो. दृष्टांत कहे छे के, मृत्तिकानो काचो घडो सूर्य अने अग्निना तापे करीने तेजवंत थाय छे. ८७ ॥

हवे ये काव्यथी भावनाद्वार कहे छे.

( स्रग्धरावृत्तम्. )

दानं वित्तव्ययेनापरयुवतिरतित्यागतः शीललीला,
नानाहाराप्रचारात्तप इह तदहो हृद्यपध्यानहीनाः ॥
भावं कुर्वंतु येनाप्यखिलसुखभृतां वल्कलस्येव मुक्तिः,
मिष्टास्वादैर्यदि स्यात्तनुतनुपटुता को न तां कारयेत्तत् ८८

दानमिति । वित्तव्ययेन द्रव्यव्ययेन दानं भवति । शीललीला अपरयुवतिःपरस्त्रीस्तस्यां रतित्यागतः संभोगमोचनात् भवति । इह जगति नानाहाराप्रचारात् नानाविधाहारमोचनात्तपो भवति । तत्तस्मात् कारणात् अहो इत्याश्चर्ये । हृदि मनसि अपध्यानहीनाः दुष्टध्यानरहिताः संतो भावं कुर्वंतु । येनभावेन अखिलसुखभृतां समस्तसौख्यधारकाणां प्राणिनां वल्कलस्येव वल्कलचीरिवालतपस्विवत् मुक्तिर्भवति ॥ दृष्टांतमाह ॥ ननु निश्चितं यदि तनुपटुता शरीरनिरामयता मिष्टास्वादैः शर्करादिभिः स्यात् तर्हि तां तनुपटुतां को न कारयेत् अपि तु सर्वोऽपि लोकः कारयति॥ ८८॥

आ लोकोने विषे द्रव्यनो व्यय करवाथी दान थाय छे, परस्त्रीने विषे प्रीतिनो त्याग करवाथी शील कहेवाय छे अने नाना प्रकारना आहारना परित्यागथी तपश्चर्या थाय छे; माटे हे भव्यजनो! तमे हृदयमांथी दुष्ट ध्यानने दूर करीने ते दान, ब्रह्मचर्य अने तप विगेरेने विषे भाव करो के, जेथी सर्व प्रकारना सुखने धारण करनाराओनी मध्ये वल्कलचीरिनी पेठे तमारी पण मुक्ति थाय.

दृष्टांत कहे छे के, जो मिष्ट भोजन विगेरेथी शरीर निरोगी रहेतुं होय तो पछी ते कयो पुरुष न करे? ॥ ८८ ॥

( शार्दूलविक्रीडितवृत्तम्. )

यो दानं न ददौ कथैव न तपःशीलार्हदर्चागमे,
यस्यानार्ययुजोऽत्र केवलमभूद्भावादिलानंदने ॥
स्वर्णादौ ज्वलनेन वह्निदृपदोर्गाढं मिथो घट्टने-
रादर्शे रविणा महौषधिवने किंतु स्वभावेन भा ॥८९॥

यदिति । य इलानंदनो दानं न ददौ । अनार्ययुजोऽनार्ययुक्तस्य यस्येलानंदनस्य तपःशीलार्हदर्चागमे तपःशीलजिनपूजासिद्धांतविषये कथैव वार्तैव नासीत् । यत्तदोरेक संबंधः । अत्र लोके भावात्तस्मिन्निलानंदने केवलं केवलज्ञानमभूत् । दृष्टांतमाह । ज्वलनेनाग्निना स्वर्णादौ भा कांतिर्भवति । गाढं तीव्रं मिथः परस्परं घट्टनैरास्फालनैः कृत्वा वह्निदृपदोरग्निपाषाणयोर्भा भवति । आदर्शे दर्पणे रविणा भा कांतिर्भवति । पुनः महौषधिवने या कांतिः स्यात् सा किं ज्वलनादिना स्यात् । अपि तु स्वभावेन सहजेन एव स्यात् ॥ ८९ ॥

जेणे नथी आप्युं दान, अनार्य लोक साथे जोडावाने लीधे नथी करी तपश्चर्या, नथी पाल्युं शील, नथी करी जिनेश्वरनी पूजा के नथी करयुं शास्त्रश्रवण एवा पण इलापुत्रने आ लोकमां फक्त भावथीज केवलज्ञान उत्पन्न थयुं. दृष्टांत कहे छे के, सुवर्णादिकने विषे अग्निथी कांति उत्पन्न थाय छे, परस्पर घसारा-

थी अग्निना पाषाणमां कांति प्रगट थाय छे, दर्पणमां सूर्यनी कांतिथी प्रकाश थाय छे; परंतु म्होटा एवा औषधीओना वनने विषे जे कांति होय छे तेतो निश्चे स्वभाविकज होय छे. ॥ ८९ ॥

हवे बे काव्यथी धर्मद्वार कहे छे.

( स्रग्धरावृत्तम्. )

मातुर्गर्भावतारे चतुरधिकदशस्वप्नसंसूचितौ प्राक्-
जातौ यावेकरात्रौ त्वजितसगरयोःपुण्ययोःपश्य जातिम्
आगर्भोत्पादमिंद्रैरसुरसुरनरैः सेवनीयस्त्रिलोकी-
नाथोऽर्हन्नेक आसीद्भरतनृपनतोऽन्यश्च चक्री द्वितीयः ९०

मातुरिति । यौ अजितसगरौ एकरात्रौ एकस्मिन् रात्रौ जातौ उत्पन्नौ । किंभूतौ । मातुर्गर्भावतारे जनन्याः कुक्ष्यवतारे चतुरधिकदशस्वप्नैश्चतुर्दशस्वप्नैः संसूचितौ प्रख्यापितसुभाग्यौ । पुण्ययोः पवित्रयोः तयोरजितसगरयोरजितनाथसगरचक्रवर्तीनोः जातिं पश्य । हे भविक इतिशेषः । तयोरुत्पत्तिमाह । एकः श्री अजितनाथः आगर्भोत्पादं गर्भोत्पत्तियावत् गर्भोत्पत्तिमारभ्येत्यर्थः इंद्रैः सुराधिपैः असुरसुरनरैः दैत्यदेवमनुष्यैः सेवनीयः पूजनीयः । अर्हन् किं रूपः । त्रिलोकीनाथः लोकत्रयपतिः । अन्यश्च द्वितीयश्चक्री सगरचक्रवर्ती बभूव । किं रूपः । भरतनृपनतः भरतक्षेत्रस्य राजभिर्नमस्कृतः ॥ ९० ॥

जेओ पहेलां चौद स्वप्नोए सूचित होइ माताना गर्भावतारने

विषे एक रात्रीमां उत्पन्न थइ पुण्यशाली एवा अजितनाथ अने सगर चक्रवर्ती थया, तेमनी जाति जुओ. तेमनामांथी एक गर्भमां रह्या त्यारथीज इंद्र, देव, भवनवासी अने मनुष्योए सेवा करवा योग्य एवा त्रिलोकीनाथ श्रीतीर्थंकर थया. अने बीजा भरतखंडना राजाओए नमस्कार करेला चक्रवर्ती थया. ॥ ९० ॥

तुल्यं तीर्थाधिपत्यं बलमपि सदृशं सर्वतीर्थंकराणां,
किं तु श्रीमल्लिनाथः प्रथयति सुकृतैः किंचिदाश्चर्यमुच्चैः
पूर्वाह्णे यस्य जज्ञे व्रतमपि सुलभं केवलं चापराह्णे,
ज्ञानं नाभेयवीरप्रभृतिजिनपतेरप्यभूद्यच्चिरेण ॥९१॥

तुल्यमिति । सर्वतीर्थंकराणां समस्तार्हतां तीर्थाधिपत्यं तुल्यमेव । बलं शक्तिस्तदपिसदृशमेव । किं तु पुनः श्रीमल्लिनाथः सुकृतैः पुण्यैः कृत्वा उच्चैरतिशयेन किंचिदाश्चर्यं प्रथयति विस्तारयति । यस्य श्रीमल्लिनाथस्य पूर्वाह्णे पूर्वदिवसे व्रतमपि सुलभं जज्ञे च पुनरपराह्णे पाश्चात्यदिने केवलं केवलज्ञानं जज्ञे जातं । यद्यस्माद्यत्केवलं नाभेयवीरप्रभृतिजिनपतेरपि ऋषभवीरादिजिनानां चीरेण दीक्षाग्रहणानंतरं बहुभिर्दिनैर्बभूवेति विस्मयः ॥ ९१ ॥

सर्व तीर्थंकरोने विषे तीर्थाधिपणुं तथा बल ए बे समान छे, तोपण श्रीमल्लिनाथ प्रभु पुण्यने लीधे अतिशयवडे कांइक आश्चर्य उत्पन्न करे छे. कारणके, जेमने दिवसना पहेला प्रहरने विषे व्रत प्राप्त थयुं अने ( तेज दिवसना ) छेल्ला प्रहरने विषे केवल ज्ञान प्रगट थयुं, के जे केवलज्ञान श्री आदिनाथ अने महावीर प्रभु विगेरेने तो दीक्षा लीधा पछी बहु काले प्राप्त थयुं हतुं. ॥९१॥

हवे ये काव्यथी विषयद्वार कहे छे.

श्रुत्वाह्वानं स्त्रियस्तामनुसरति रसो हंसकोन्नादपादे-
नाशोकस्पृष्टमात्रस्तिलककुरुबकौ चुंबनालिंगनाभ्याम्
पुष्प्येद्वक्त्राब्जवासाधिकरससुरया केसरश्चेद्विकारोऽ-
प्येषां तत्सत्यकीवाधिकविषयरतिर्यातु किं नो भवार्त्तिम्

श्रुत्वेति । रसः पारदः स्त्रिय आह्वानं आमंत्रणं श्रुत्वा आकर्ण्य तां स्त्रियमनुसरति अनुयाति । अशोको वृक्षः स्त्रिया हंसकोन्नादपादेन हंसकेन नूपुरेण उन्नदतीति शब्दायत इति हंसकोन्नादश्चासौ पादश्चेति कर्मधारयः तेनस्पृष्टमात्रः सन् पुष्प्येत । तिलककुरुबकौ नामानौ वृक्षौ स्त्रियश्चुंबनालिंगनाभ्यां कृत्वा पुष्प्येतां । केसरः केसरनामा वृक्षः स्त्रियो वक्त्राब्जवासाधिकरससुरया मुखकमलाधिकरसमदिरया कृत्वा पुष्प्येत् । एषामेकेंद्रियाणां पारदादीनां चेद्विकारो मदनविक्रिया वर्त्तते तर्हि सत्यकीव सत्यकीनामा विद्याधर इव अधिकविषयरतिः अधिका विषयरतिर्यस्य स एतादृशः पुरुषः भवार्त्तिं संसारपीडां किं नो यातु नो गच्छतु अपितु यात्वेव ॥ ९२ ॥

पारो स्त्रीना आमंत्रणने सांभळी ते स्त्रीनी पाछळ जाय छे; अशोक वृक्ष स्त्रीना झांझरथी शब्दित थता पगवडे स्पर्शित थयो छतो प्रफुल्लित थाय छे; तिलक अने कुरबक वृक्ष स्त्रीना चुंबन अने आलिंगन एम अनुक्रमथी प्रमोदित थाय छे अने केशर वृक्ष स्त्रीना मुखकमळथी अधिक सुवासित मदिराथी प्रफुल्लित थाय छे.

था प्रमाणे जो आ एकेंद्रिय वृक्षोमां पण विकार रहेलो छे तो सत्यकी विद्याधरनी पेठे विषयमां अधिक प्रीतिवालो माणस संसारनी पीडाने केम न पामे ? अर्थात् पामेज. ॥ ९२ ॥

संसारारण्यमध्ये मधुरसुखकटुप्रांतभृत्कामधूर्तो,
दक्षान्मूढांश्च तत्तत्सुखलवभजनैः प्राणिनो विप्रतार्य ॥
हृत्वा तत्पुण्यवित्तं गमयति कुगतिं ब्रह्मदत्तं यथा तत्-
पूर्वभ्रातेव धीरःशिवमटति पुनस्तं तपोऽस्त्रेण भित्वा ९३

संसारेति । कामधूर्तः कामोऽनंगः स एव धूर्तः तत्पुण्यं धर्म एव वित्तं हृत्वा गृहीत्वा आदाय ब्रह्मदत्तं यथा ब्रह्मदत्तचक्रिणमिव कुगतिं नरकं गमयति प्रापयति । किं कृत्वा । दक्षान् निपुणान् मूढान्मूर्खांश्च प्राणिनो जीवान् तत्तत्सुखलवभजनैः तत्तत्सुखकणसेवनैर्विप्रतार्य वंचयित्वा । किंरूपः सन् प्राणिनो विप्रतारयतीत्याह । संसारारण्यमध्ये भवाटवीमध्ये मधुरं मुखे कटु प्रांते बिभ्रतीति मधुरसुखकटुप्रांतभृत् । तत्तस्मात्कारणात् तत्पूर्वभ्रातेव पूर्वजन्मांतर ब्रह्मदत्तचक्रवर्त्तिभ्राता मुनिरिव धीरो दृढः पुरुषः शिवं मोक्षं अटति गच्छति । किं कृत्वा । पुनस्तं कामधूर्तं तप एव अस्त्रं तपोऽस्त्रं तेन तपोऽस्त्रेण भित्वा भच्छेद्य ॥ ९३ ॥

संसाररूपी अरण्यने विषे प्रथम मधुर अने अंते कडवो एवो कामदेव रूपी धूर्त, डाह्या अने मूर्ख एवा सर्व प्राणीओने ते ते अल्प सुखना भोग आपी छेतरीने, तेमना पुण्यरूप द्रव्यने हरि लइ ब्रह्मदत्तनी पेठे नरकगतिमां पहोचाडे छे. पण जे ब्रह्मदत्तना पूर्व ज-

न्मना भाइना जेवो धीर पुरुष होय छे ते, ते कामरूपी धूर्तने तप रूपी शस्त्रवडे भेदी नाखी मोक्ष मेळवे छे. ॥ ९३ ॥

हवे वे काव्यथी शब्दद्वार कहे छे.

(वसंततिलकावृत्तम्.)

गीतामृतातिरतिकर्णपुटस्त्रिपृष्ट-
पर्यंकपाल इव कष्टमुपैति घोरम् ॥
सछद्मलुब्धककृताद्भुतगीतलुब्धं,
बद्धं विलोकय मृगं भयविह्वलांगम्॥ ९४ ॥

गीतेति । गीतमेव अमृतं तत्र अतिरतिः अत्यासक्तियौस्तौ गीतामृतातिरतौ एवं विधौ कर्णपुटौ यस्य स तथा । यस्यासंतं कर्णरसो भवति सः पुरुषः घोरं भयानकं कष्टमुपैति माप्नोति कथमिव । त्रिपृष्टपर्यंकपाल इव त्रिपृष्टवासुदेवस्य शय्यापालक इव । दृष्टांतमाह । मृगं एवंविधं विलोकय पश्य । किदृशं । भयेन विह्वलं कातरं अंगं अस्य स तं । पुनः किदृशं । सछद्मभिः सकपटैर्लुब्धकैरापेटकैः कृतं अद्भुतगीतं गानं तत्र लुब्धं लोलुपं अत एव रज्वादिना बद्धम्. ॥ ९४ ॥

गीतरूप अमृतने विषे अति आसक्त छे कान जेना एवो पुरुष, त्रिपृष्ट वासुदेवना शय्यापालकनी पेठे घोर दुःख पामे छे. दृष्टांत कहे छे के, कपटी पारधीए करेला अद्भुत गीतमां लुब्ध थयेला अने तेथीज पासमां पडी बंधन पामेला, तेमज भयथी वि-ह्वल अंगवाळा मृगने जुओ. ॥ ९४ ॥

स्यात् क्षुल्लकाभिधकुमारवदस्थिरेषु-
स्थैर्याय गीतमपि बोधकरं कदाचित् ॥
बालोऽपिनिवृतिमुपैति निशम्य सम्यक्
मात्रोदितानि कलमन्मथगीतकानि ॥ ९५ ॥

स्यादिति । गीतमपि कदाचित् अस्थिरेषु पुरुषेषु स्थैर्याय निश्चलाय भवति बोधकरं ज्ञानकारकं च स्यात् । किंवत् । क्षुल्लकाभिधकुमारवत् यथा क्षुल्लकनाम्नि राजकुमारे मुनौ अस्थिरे गीतं स्थैर्याय जातं । सुठ्ठु गाइयं सुठ्ठु निवाइयमितिगीतं ॥ दृष्टांतमाह । बालोऽपि शिशुरपि मात्रा जनन्या उदितानि कथितानि कलमन्मथगीतकानि कलानि मधुराणि मन्मथानि प्रीयाणि गीतकानि गीतानि सम्यक् निशम्य श्रुत्वा निर्वृत्तिं सुखमुपैति गच्छति॥९५॥

गीत पण क्यारेक क्षुल्लक कुमारने थयुं तेम अस्थिरने स्थिर करनारुं अने बोध करनारुं पण थाय छे. दृष्टांत कहे छे के, बालक पण माताये कहेला मधुर प्रीय गीतोने सारी रीते सांभलीने सुख पामे छे. ॥ ९५ ॥

हवे बे काव्यथी रूपद्वार कहे छे.

( स्रग्धरावृत्तम्. )

नो विंदत्युष्णशीताद्यपि न सदसदप्युक्तमाविष्करोति,
दुःसद्गंधान्न वेत्ति प्रथयति न रसान् रूपनिर्मग्नदृष्टिः॥

तद्दृष्ट्येकेंद्रिये ऽस्मिन्नहिताहितमतिः का कुमाराग्रनंदौ,
चंपापूःस्वर्णकारे विवशदृशि यथा पंचशैलेशदेव्योः

नो विंदतीति । रूपे निर्मग्ना दृष्टिर्यस्य स रूपनिर्मग्नदृष्टिः पुरुपः उष्णशीताद्यपि नो विंदति न जानाति । सद् प्रधानं असद् विरूपमपि कर्म उक्तं भाषितं न आविःकरोति न प्रकटीकरोति । दुःसद्गंधान् दुर्गंधान् सद्गंधान् न वेत्ति न जानाति । रसान् शृंगारादीन् न प्रथयति न विस्तारयति। तत्तस्मात् कारणात् अस्मिन् दृष्ट्येकेंद्रिये दृष्टिरेव एकं इंद्रियं यस्य स तस्मिन् अहिताहितमतिः का स्यात् अहिते सर्पादौ हिते मातृधर्मादौ किदृशी बुद्धिः स्यात् । अपि तु न किदृशी अपि । कस्मिन्निव । यथा कुमाराग्रनंदौ नाम्न्यपि चंपापूःस्वर्णकारे चंपापुरिसक्ते स्वर्णकारे रूपनिर्मग्न दृष्टौ सति किदृशी मतिरासीत् । अपि तु न काप्यासीत् । किंविशिष्टे स्वर्णकारे। पंचशैलेशदेव्योः पंचशैलपर्वतस्वामिन्योर्हासाप्रहासानाम्न्योर्देव्योर्विवशदृशि विह्वला दृष्टिर्यस्य स तथा तस्मिन् ९६

पंचशैल पर्वत उपर निवास करनारी हासा प्रहासा देवीयो उपर अनुरागवंत थयेला चंपानगरीना सोनी कुमाराग्र नंदीनी पेठे फक्त रूपने विषे आसक्त छे दृष्टि जेनी एवो पुरुष, नथी जाणतो उना टाढाने के, नथी सांभलतो सारा खोटा कहेला वचनने, नथी ओलखी शकतो सुगंधने के दुर्गंधने के, नथी पारखी शकतो रसोने, माटे ते एकेंद्रियवाला पुरुषने सर्पादिकमां खोटी अथवा माताना धर्मादिकमां सारी बुद्धि क्यांथी होय ? अर्थात् नज होय.

( शालिनीवृत्तम्. )

आस्तां सत्यं रूपमालेख्यबिंब–

स्यालोकेऽपि क्लेश एवातिरागात् ॥
सुज्येष्टा श्रीश्रेणिकक्ष्मापवत्स्यात्,
नैणभ्रांतिर्भ्रांतिवारीक्षणात्किम् ॥ ९७ ॥

आस्तामिति । सत्यं रूपं आस्तां तिष्ठतु । स्त्रियः सत्सरूपविलोकनान्मनोविकारकरणे का वार्ता । परंतु आलेख्यबिंबस्य चित्रीतरूपस्य आलोकेऽपि दर्शनेऽपि सति अतिरागात् अतिरागदर्शनात् क्लेश एव स्यात् । किमिव । सुज्येष्टा श्रीश्रेणिकक्ष्मापवत् । यथा सुज्येष्टा चेटकराजपुत्री श्रीश्रेणिकराजस्यालेख्यचित्रपटरूपावलोकेऽपि अतिरागात् क्लेशभागेव आसीत् ॥ दृष्टांतमाह । भ्रांतिवारीक्षणात् व्यलीकपानीयदर्शनात् एणस्य मृगस्य भ्रांतिः श्रमो एणभ्रांतिः मृगश्रमः किं न स्यात् । अपि तु श्रम एव स्यात् ९७

सत्य रूप तो दूर रहो, परंतु आलेखेलुं रूप जोवाथी पण अत्यंत अनुरागने लीधे सुज्येष्टाने श्रेणिकराजानुं रूप जोवाथी थयो तेम क्लेश थाय छे. दृष्टांत कहे छे के, झांझवानां जल जोवाने लीधे भमवाथी शुं हरिणने थाक नथी लागतो ? अर्थात् लागे छे. ॥९७॥

हवे बे काव्यथी रसद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

रूक् पथ्यं च रसैर्यथा बहुतया संसेवितैर्लौलुपैधीरैर्यद्विविना भवेदपि तथा संसारमोक्षावपि ॥
यन्नानारसलालसः स मधुरामंगुर्भवं भ्रांतवान्,

यत्तीर्णश्च स ढंढणःसममघैःसन्मोदकक्षोदकः॥९८॥

रुगिति । लोलुपैः अतितृष्णाशीलैः पुरुषैः बहुतया प्राचुर्येण संसेवितैः भक्षितैः रसैः कृत्वा यथा रुक् व्याधिः भवेत् । च धीरैः यद्यस्मात्कारणाद् विधिना संसेवितैः रसैर्यथा पथ्यं हितं भवेत् तथा संसारमोक्षौ भवेताम् । दृष्टांतद्वयमाह । यद्यस्मात्कारणात् नानारसलालसः नानाविधरसलोलुपः सः प्रसिद्धः मथुरामंगुनामाचार्यो भवं संसारं भ्रांतवान् बभ्राम । च अघैः पापैः समं सार्द्धं सन्मोदकक्षोदकः प्रधानमोदाकानां चूर्णकर्ता स प्रसिद्धः ढंढणः भवं संसारं तीर्णः ततार ॥ ९८ ॥

लोलुपी पुरुषोए बहु रीते सेवन करेला रसथी जेम रोग थाय छे अने धीर पुरुषोए विधि प्रमाणे सेवन करेला रसथी जेम पथ्य थाय छे. तेवी रीते संसार अने मोक्षनुं पण जाणवुं. जुओ, नाना प्रकारना रसमां प्रीतिवाला मथुरामंगु आचार्ये संसारने विषे भ्रमण करवुं अने पापसहित उत्तम एवा मोदकनुं चूर्ण करनार ढंढण मुनि संसारने तरी गया ॥ ९८ ॥

किं जेयो रसनेंद्रियेण स महान् यः सत्वरक्षारुचि-
र्यद्वर्म्मरुचिः कुतुंबकमपि पक्वान्नवद्भक्षयन् ॥
किं वा विश्वहिताय नोदरगतं सिंधुर्दधौ वाडवं,
सारग्राहिसुरास्तमाशु न विषं किं नीलकंठः पपौ९९

किमिति । स महान् पुरुषः रसनेंद्रियेण कृत्वा किं जेयः स्यात् अपि तु न जीयते । स कः । यः सत्वरक्षारुचिः सत्वानां प्राणि-

नां रक्षायां पालने रुचिर्यस्य स तथा । यद्वत् यथा धर्मरुचिर्महात्मा पक्वाम्रवत्पक्वाम्रफलवत् कुतुंबकमपि कटुतुंबकमपि भक्षयन् सन् किं रसनेंद्रियेण जेय आसीत् अपि तु न जेयो बभूव । दृष्टांतमाह। सिंधुः समुद्रः विश्वहिताय त्रैलोक्यमंगलाय उदरगतं जठरमध्यस्थितं वाडवं वडवानलं किं न दधौ न धारयामास अपि तु दधावेव । सारग्राहिसुराः सारग्राहिणश्च ते सुराश्च तथा देवाः सारग्राहिणः जाताः नीलकंठ ईश्वरस्तं विषं आशु शीघ्रं किं न पपौ अपि तु विश्वहिताय विषमपि पपावेव ॥ ९९ ॥

जीवरक्षा उपर रुचि छे जेनी एवो महापुरुष शुं जीव्हा इंद्रियथी जीताय खरो ? जूओ, जीवरक्षा उपर रुचि धरनारा धर्मरुचि मुनि कडवा तुंबडाने पण पाकेला आम्रफलनी पेठे भक्षण करी गया. दृष्टांत कहे छे के, विश्वना हितने अर्थे शुं समुद्रे वडवाग्निने पोताना उदरमां नथी राख्यो ? अथवा सार वस्तुने ग्रहण करनारा देवताओए त्यजी दीधेलुं विष शुं शिवे नथी पान कर्युं ? अर्थात् जगत्ना हितने माटे समुद्रे वडवाग्निने धारण कर्यो छे अने शंकरे विषनुं पान पण कर्युं छे. ॥ ९९ ॥

हवे बे काव्यथी गंधद्वार कहे छे.

स्याद्गंधोऽपि यतस्ततोऽप्यविगतः क्लेशाय नाशाय वा,
तद्घ्राणाक्यधियातुरः श्रुतिमगान्मंत्री सुबंधुर्न किम् ॥
पश्य छिद्रयति पुष्पसौरभहृतः सर्पः सदर्पोऽपि सन्,
सायं चांबुजकोशबंधनमलिः प्राप्नोति गंधातिवट

स्यादिति । गंधोऽपि यतस्ततोऽपि स्थानात् अधिगतः प्राप्तः सन् क्लेशाय नाशाय वा स्यात् । तत्तस्मात् सुबंधुर्मंत्री चाणाक्यधियातुरः चाणाक्यबुद्ध्या पीडितः सन् श्रुतं कर्णगोचरं किं न अगात् अपि तु श्रुत एव । दृष्टांतमाह । यस्य विलोकय सदर्पोऽपि सगर्वोऽपि सर्पः पुष्पसौरभहृतः पुष्पपरिमलगतः सन् क्लिश्यति क्लेशं प्राप्नोति गारुडिकबंधनं लभते, अलिर्भ्रमरश्च गंधातितृट् परिमललोभी सन् सायं संध्यायां अंबुजकोशबंधनं कमलकोशबंधनं प्राप्नोति ॥१००॥

ज्यां त्यांथी आवेलो पर्यीय पण गंध, दुःख तथा नाशने माटे थाय छे. चाणाक्यनी बुद्धिवडे क्लेश पामेलो मंत्री सुबंधु शुं तमारा सांभलवामां नथी आव्यो ? दृष्टांत कहे छे के, जुओ, अहंकार युक्त एवो सर्प पण पुष्पना सुगंधने विषे आसक्ति करवाथी गारुडीथी बंधन पामी क्लेश पामे छे अने सुगंधनी अति तृष्णावालो भ्रमर सायंकाले कमलकोशरूप बंधनमां पडे छे. ॥ १०० ॥

विस्रैर्धातुभिरंगमेतदघटि प्रागेव तत्राप्यहो,
दुर्गंधः प्रतिकर्मणापि हि वहिः प्राक्कर्मतः केचन॥
दुर्गंधेव मृगातनुजवदतः सौरभ्ययत्नोऽत्र को,
गंधद्रव्यचयैर्निबोधशुचिता का नीलिकाभाजने१०१

विस्रेरिति । प्रागेव पूर्वमेव विस्रैर्दुर्गंधैर्मज्जास्तिरुधिरशुक्रादिभिः सप्तभिर्धातुभिः कृत्वा एतदंगं शरीरमघटि घटितं । तत्रापि शरीरे अहो इत्याश्चर्ये वहिः प्रतिकर्मणापि उद्वर्त्तनमंडनादिप्रकारेणापि केच न प्राक्कर्मतः पूर्वभवोपार्जितकर्मणा दुर्गंधः स्यात् । कामि-

च । दुर्गंधेव मृगातनुजवच्; यथा तयोः बहिःप्रतिकर्मणापि दुर्गंधो बभूव । अतः कारणात् अत्र शरीरे कः सौरभ्ययत्नः । किं कृत्वा। गंधद्रव्यचयैः कर्पूरकस्तुरिकादिसुगंधद्रव्यवस्तुसमूहैः ॥ दृष्टांतमाह ॥ नीलिकाभाजने गुलिकाभांडे नियोधशुचिता स्वभाविकीपवित्रता का स्यात् अपितु न ॥ १०१ ॥

प्रथम आ शरीरज दुर्गंधि धातुओथी बनेलुं छे. आश्चर्य छे के ते शरीरने विषे बहार धोयुं कस्तुरि विगेरे अंगराग लगाययुं विगेरे, प्रतिकर्म करता छता पण कोइ पूर्व कर्मने लीधे दुर्गंधा अने मृगापुत्रनी पेठे नहि दूर थइ शके एवो दुर्गंधज रहेलो छे; माटे एवा शरीरने सुगंधी पदार्थोथी सुगंधीवालुं करवानो शो प्रयत्न करवो ? दृष्टांत कहे छे के, गलीना पात्रने विषे स्वभाविकी पवित्रता क्यांथी होय ? ॥ १०१ ॥

हवे बे काव्यथी स्पर्शद्वार कहे छे.

( वसंततिलकावृत्तम. )

स्पर्शातिगृध्नुरति वल्यपि याति दुःखं,
प्रद्योतभूप इव मंत्र्यभयेन बद्धः ॥
को वाग्रदीप्यादिभमेव न चेत्करेणु–
स्पर्शांधधीः स्थगितगर्तगतोऽभविष्यत् ॥१०२॥

स्पर्शेति । अतिवल्यपि अति बलवानपि पुरुषः स्पर्शातिगृध्नुः स्त्रीस्पर्शेऽत्यंतलोलुपः सन् दुःखं याति । क इव । मंत्र्यभयेन अभयकुमारमंत्रिणा बद्धो स्त्रीस्पर्शलोलुपो मालवदेशाधिपतिर्बद्ध

प्रद्योतभूप इव स्पर्शलोलुपः चंडप्रद्योतभूपतिः यथा । दृष्टांतमाह । चेद्यदि इभो हस्ती करेणुस्पर्शांधधीः हस्तिनीस्पर्शांधबुद्धिः सन् स्थगितगर्तगतः प्रच्छन्नगर्तमाप्तो नाभविष्यत् तर्हि इभं हस्तिनं कोऽग्रहीष्यत् अपि तु न कोऽपि. ॥ १०२ ॥

अत्यंत बळवान् थयो पण प्राणी स्पर्श इंद्रियने विषे घणो इच्छातुर थयो छतो अभय कुमारे बंधनमां नाखेला चंडप्रद्योतन राजानी पेठे दुःखी थाय छे. दृष्टांत कहे छे के, हाथणीनो स्पर्श करवामां आंधली बुद्धिवाळो हाथी जो ढांकी राखेला खाडाने विषे न पडतो होय तो तेने कोण पकडी शके ? ॥ १०२ ॥

यः स्पर्शसौख्यलवमिच्छति मूढबुद्धिः ।
सिद्धिप्रदेन तपसा सुकुमालिकेव ॥
चिंतामणेः सकलभूतलराज्यदातु–
र्बालः स भृष्टचणकान् वृणुते क्षुधार्तः ॥१०३॥

यः स्पर्शेति । यो मूढबुद्धिः स्यात् स पुरुषः सिद्धिप्रदेन सिद्धिदायकेन तपसा कृत्वा स्पर्शसौख्यलवं स्पर्शसुखलेशं इच्छति नान्यः । केव । सुकुमालिका इव । यथा तया बहुविटभुज्यमानवेश्यादर्शनात् सिद्धिदायकेन तपसा कृत्वा द्रौपदीभवसंबंधिनिदानं बद्धं । दृष्टांत माह । यः क्षुधार्तः सकलभूतलराज्यदातुः सर्वपृथ्वीसाम्राज्यदायकचिंतामणेः सकाशात् भृष्टचणकान् वृणुते याचते स बालःस्यात् ॥ १०३ ॥

जे मूढबुद्धि पुरुष, सिद्धिने आपनारी एवी तपश्चर्यायें करीने [illegible]कुमारिकानी पेठे अल्प एवा पण स्पर्शना सुखनी इच्छा करे छे [illegible], सकल पृथ्वीना राज्यनी संपत्ति आपनार चिंतामणि पासेथी रो-[illegible]ला चणाने मागनार भूख्या बालक जेवो छे ॥ १०२ ॥

हवे ये काव्यथी सात व्यसनद्वार कहे छे.

( स्रग्धरावृत्तम्. )

[illegible]:सत्वं निर्दयत्वं विविधविनटनाशौचनाशात्महानी,
[illegible]स्वास्थ्यं वैरवृद्धिर्व्यसनफलमिहामुत्रदुर्गत्यवाप्तिः ·
[illegible]लुकयक्ष्मापवत्सद्व्यसनविरमणे किं न दक्षा यतध्वं,
[illegible]ानंतो मांधकूपे पतत चलत मा दृग्विपाहेः पथा हे ॥

निःसत्वमिति । १ द्यूतरमणव्यसनात् निःसत्वं दारिद्र्यं स्यात् [illegible] २ मांसभक्षणात् निर्दयत्वं निःकरुणत्वं । ३ मद्यपानात् विविधा [illegible]नटना विडंबना उपहास्यं दुर्गंधादिका स्यात् । ४ वेश्याभोगात् [illegible]चस्य पवित्रताया नाशः स्यात् अपवित्रता भवतीत्यर्थः । ५ आ-[illegible]कात् आत्महानिः ६ चौर्यात् अस्वास्थ्यं व्याकुलत्वं विश्वास[illegible]तत्वं च । ७ परदारसेवातो वैरवृद्धिर्भवति । इह लोके इदं [illegible]सनफलं भवति । अमुत्र च परलोके दुर्गत्यवाप्तिः नरकप्राप्तिः ।

ग्रंथकर्त्ताए दरेक द्वारना बबे काव्य करयां छे; पण सात व्य-[illegible]न द्वारना आ बीजा बे काव्य अक्षेप होवाथी अहिं दाखल करयां छे.

द्यूतं च मांसं च सुरा च वेश्या,
पापर्द्धिचौर्ये परदारसेवा ॥
एतानि सप्त व्यसनानि[illegible]

सुहृत्साधूपासनधर्मचिंतनगुणाः द्रव्यकीर्तिकुलक्रमागतकलासौंदर्यकांतिमित्रमुनिसेवाधर्मचिंतनादिगुणाः हि निश्चितं संतोऽपि विद्यमाना अपि नश्यंति नाशं यांति । यद्वत् यथा पांडुसुतेषु पांडवेषु तत्सुतसुधीषु तेन द्यूतेन गतबुद्धिषु सत्सु विद्यागमादिगुणा अपि नष्टाः । दृष्टांतमाह । आदित्यभावर्जिते सूर्यकांतिरहिते विश्वे जगति तमसा अंधकारेण घटपटस्तंभादि किं स्फुटं प्रकटं लक्ष्यते ज्ञायते अपि तु न ॥ १०६ ॥

द्यूत रमवाने लीधेज द्रव्य, यश, कुळाचारकला, सौंदर्य, तेज, सुमित्र, गुरूपासना अने धर्मचिंता विगेरे विद्यमान छतां पण गुणो नाश पामेछे. जूओ, द्यूतथीज बुद्धि भ्रष्ट थइ जवाने लीधे पांडवोना पण गुणो नाश पाम्या हता. दृष्टांत कहे छे के, सूर्यनी कांती रहित छतां आ विश्वने विषे अंधकारने लीधे घट, पट, स्थंभ विगेरे शुं स्पष्ट देखायछे खरां ? ॥ १०६ ॥

( वसंततिलकावृत्तम्. )

द्यूतं न किं त्यजत किं दहत स्वगेहं,
छागं च मूत्रयति किं वदने स्वकीये ॥
तत्तादृशीप्रियतमासहितो नलोऽपि,
जानीत रोर इव राज्यसुखान्निरस्तः ॥ १०७ ॥

द्यूतमिति । द्यूतं किं न त्यजत । स्वगेहं निजगृहं किं दहत च स्वकीये वदने निजमुखे छागं अजं किं मूत्रयसि ॥ तत्तस्मात्कारणात् तादृशीप्रियतमा दमयंती तया सहितो नलोऽपि नलनृ

पोऽपि राज्यसुखाभिरस्तो भ्रष्टःसन् रोर इव दरिद्र इव जानीत.१०७

हे प्राणीयो ! तमे द्यूत केम त्यजता नथी ! पोताना घरने शा माटे बालो छो ? अने पोताना मुखमां थकराने शा माटे मूतरावो छो ? कारण तमे जाणो छो के, ए द्यूतने लीधेज नळराजा तेवो पोतानी प्रिया दमयंती सहित राज्यथी भ्रष्ट थइ दरिद्रीसरखो थयो.१०७

हवे ते काव्यथी मांसद्वार कहे छे.

मांसाशनान्नरक एव ततः स देव-
स्तल्लोलुपं हरिनृपं कृतवान् सरोषः ॥
किं पाकपेशलतराशनदत्ततृष्णे,
किंपाकभोजिनि मृतेरपि संशयोऽस्ति ॥ १०८ ॥

मांसेति । मांसस्य अशनं भक्षणं तस्मात् नरक एव स्यात् ततः स देवः तल्लोलुपं मांसलोभिनं हरिनृपं हरिवंशकर्तारं राजानं कृतवान् चकार। कथंभूतः देवः॥ सरोषः पूर्वभवबद्धवैरः। दृष्टांतमाह। किंपाकं विषवृक्षफलं तद्भक्षितुं इत्येवं शीलं यस्येति किंपाकभोजी तस्मिन् पुरुषे मृतेरपि मरणादपि किं संशयोऽस्ति अपि तु न किंतु म्रियते एव । किं रूपे किंपाकभोजिनि । पाकेन परिपक्वतया पेशलतरं मनोज्ञतमं यदशनं भोजनं तत्र दत्ततृष्णे कृतलोभे । यथा परिपक्वफलं भुंक्ते तथा विषवृक्षफलं यदि भुंक्ते तर्हि तस्य पुरुषस्य मरणादपि किं संशयः अपि तु न ॥ १०८ ॥

मांस भक्षण करवाथी नरकज मळे छे ? अने तेटलाज माटे

पूर्वना वैरनेलीधे रोषयुक्त एवा देवताए हरि नृपतिने ते मांसमां लोलुप करचो हतो. दृष्टांत कहेछे के, पक्वपणाथी मनोहर भक्ष्य वस्तुने विषे अति लालचु थनेला एवा किंपाकफलनुं भोजन करनाराने विषे शुं मरणनो संशय रहे छे? अर्थात् नथी रहेतो ॥ १०८॥

स्नेहो दयापि हृदि कामिषलोलुपानां,
किं चिल्लणापि पतिमांसदलानि नैच्छत् ॥
नाश्नाति किं निजकुटुंबमपि द्विजिह्वी,
स्थानं स्वमन्यदपि किं दहतीह नाग्निः ॥ १०९ ॥

स्नेह इति। स्नेहः प्रेम दयापि च आमिषलोलुपानां मांसखादकानां नराणां हृदि चित्ते का किदृशी स्यात् । चिल्लणापि चिल्लणानाम्नि पट्टराज्ञी अपि पतिमांसदलानि श्रेणिकमांसखंडानि किं नैच्छत् किं न ववांछ अपि तु ववांछैव । दृष्टांतावाह । द्विजिह्वी सर्पिणी निजकुटुंबमपि स्वापत्यमपि किं नाश्नाति किं न भक्षयति अपि तु खादत्येव। अग्निश्च स्वं स्थानं अन्यदपि परकीयमपि स्थानं किं न दहति अपि तु ज्वालयत्येव ॥ १०९ ॥

मांसने विषे लोलुप एवा प्राणीओना हृदयने विषे स्नेह के दया क्यांथी? शुं चिल्लणाये पण पोताना पतिना मांसनी इच्छा नहोती करी? दृष्टांत कहेछे के, सापण शुं पोताना कुटुंबने नथी भक्षण करती? अथवा तो अग्नि शुं पोताना अने परना स्थानने नथी बालतो? अर्थात् सापण पोताना कुटुंबने भक्षण करेछे अने अग्नि पोताना तथा परना स्थानने बाले छे ॥ १०९ ॥

हवे बे काव्यथी मद्यद्वार कहे छे.

नाकृत्यकृत्यविदलं मधुपानमत्तो-
भूताभिभूत इव शून्यमनोवचोंगः ॥
किं देवकीपरिणये मदपारवश्या-
न्नाश्लेपि जीवयशसाप्यतिमुक्तकर्षिः ॥११०॥

नेति। मधुपानमत्तः पुरुषो भुताभिभुतः पुरुष इव अकृत्यं कृत्यं वा वेत्तीति ईदृशोऽलमसर्थं न स्यादेव। किंरूपः। शून्यमनोवचोंगः शून्यानि मनोवचोंगानि यस्य स तथा॥ दृष्टांतमाह। अहो इत्याश्चर्ये देवकीपरिणये देवकीविवाहावसरे मदपारवश्यात् मधपानमदोन्मत्ततया जीवयशसा अतिमुक्तकर्षिः अतिमुक्तकनामा ऋषिरपि किं नाश्लेपि किं नालिंगितः। अपि तु आलिंगित एव मदपारवश्यत्वात् ॥ ११० ॥

मद्यपानथी मस्त थयेलो पुरुष मन, वचन अने कायावालो छतां शून्य थइ जाणे भूत प्रेतादिकथी पराभव पाम्यो होय नी! तेम कृत्य अकृत्यने जाणतो नथी. दृष्टांत कहे छे के, देवकीना विवाहप्रसंगे मद्यपानथी परवश थयेली जीवयशाये शुं अतिमुक्त मुनिने आलिंगन नहोतां कर्या ॥ ११० ॥

( मालिनीवृत्तम्. )

मधु मधुरवचोभिः प्रेयसीप्रेरितो यः,
पिबति निजकुलोत्थां चारुचिंतां विमुच्य ॥

वररुचिवदिहापि प्रेक्षते दुर्गतिं सः,
क च तनुदृढता स्याद्भोगिभुक्ताज्यभोगैः॥१११॥

मधु इति। मधुरवचोभिः मिष्टवचनैः कृत्वा प्रेयसीमेरित कलत्रनोदितः सन् यः पुरुषो मधु मद्यं पिबति आस्वादति। किं कृत्वा। निजकुलोत्थां निजकुलोत्पन्नां चारुचितां प्रधानविचारं विमुच्य संत्यज्य। स पुरुषो वररुचिवत् वररुचिपंडित इव इहापि इहलोकेऽपि दुर्गतिं नरकं प्रेक्षते पश्यति। अत्र दृष्टांतमाह। भोगिभुक्ताज्यभोगैः सर्पखादितघृतभोजनैः तनुदृढता शरीरदृढिमा क च स्यात् अपि तु न ॥ १११ ॥

मधुर वचनोए करीने प्रियाये प्रेरेलो जे पुरुष पोताना कुलाचारनी उत्तम चिंताने त्यजी दइने मद्यपान करे छे ते पुरुष, वररुचिनी पेठे आ लोकमां पण दुर्गतिने जुए छे. दृष्टांत कहेछे के, सर्पे थो डेला पयां पीने खावाथी शरीरनी दृढता क्यांथी थाय ?॥१११॥

हवे बे काव्यथी वेश्याद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

वेश्या विश्वकलत्रमत्र तदहो पानीयशालाजले,
यद्वत्कांदविकाशने च शुचिता का प्रायशस्तादृशी
तस्मात्सा कृतपुण्यवत् कृतकमुच्छोकोदया किं प्रिय
पूर्णेऽलं विशदा स्वभावकलुषा दोषापि नैदौ कशो।

वेश्येति। वेश्या गणिका विश्वकलत्रं समस्तपत्नी तत्तस्मात् कारणात् अत्र वेश्यायां प्रायशो बाहुल्येन तादृशी शुचिता पावित्र्यं का। अपि तु न कापि। अहो इत्याश्चर्ये पानीयशालाजले सर्वसत्कजले यद्वत् यथा शुचिता न भवति यथा च कांदविकस्याशने भोजने प्रायः तादृशी पवित्रता न स्यात्। तस्मात् कारणात् सा वेश्या पुरुषस्य किं प्रिया वल्लभा स्यात्। अपि तु प्रिया न स्यात्। किं विशिष्टा सा वेश्या॥ कृतकमुच्छोकोदया कृतकः कृतो मुदो हर्षस्य शोकस्य च उदयो वृद्धिर्ययासा तथा। किंवत्। कृतपुण्यवत् यथा कृतपुण्यस्य वेश्या प्रिया नासीत्। बहुकालं भुक्ता दत्तप्रचुरद्रव्यापि वेश्या वल्लभा न भवतीत्यर्थः। दृष्टांतमाह। पूर्णे षोडशकलासंपूर्णे वा कृशे दुर्बले न्यूने इंदौ चंद्रमसि सति दोषापि रात्रिरपि अलं अत्यर्थं विपदा निर्मला न भवति। अनैर्मल्ये हेतुगर्भितविशेषणमाह। स्वभावकलुषा स्वभावेनैव सहजेनैव कलुषा सकश्मला समलिना। यथा रात्रिः संपूर्णेऽपि कृशेऽपि च चंद्रमसि वर्त्तमाने सति विपदा नैव भवति। किंतु कलुषैव भवति तथैव वेश्यापि बहुकालं सेवितापि नानाविधद्रव्यादिना तोषितापि प्रिया नैव स्यादिति॥ ११२॥

वेश्या सकल विश्वनी स्त्री छे तो परवना जल समान अने कंदोइना भोजन समान ए वेश्यामां प्राये पवित्रता क्यांथीज होय? तो जेणे बहु धन आप्या छतां कृतपुण्य शेठने प्रथम हर्ष अने पाछलथी शोक उत्पन्न करयो हतो एवी ते वेश्या प्रिय केम होय! दृष्टांत कहे छे के, चंद्रमा पूर्णकलायालो होय अथवा तो ओछी क-

लावालो होय तो पण स्वमावथीज मलीन एवी रात्री शुं अत्यंत निर्मल थाय खरी ? अर्थात् नज थाय ॥ ११२ ॥

( मालिनीवृत्तम्. )

क्व लघुनि गणिकानां हृद्यनेके गवाक्षा
दधति यदनुवेलं ता रसं नव्यनव्यम् ॥
तदजनि हतवृत्तः कूलवालोऽपि ताभि-
र्गलति हिमगिरिर्वा भानुभाभिर्दृढाभिः॥११३॥

क्वेति। गणिकानां वेश्यानां लघुनि तुच्छे हृदि हृदये अनेके गवाक्षाः छिद्राः। लोकभाषया गोखला इति। क्व कुतः अभूवन् यद्यस्मात्कारणात् ता गणिका अनुवेलं वेलां अनु लक्षीकृत्य नव्यनव्यं नवीनं नवीनं रसं शृंगारं दधति धारयति। तत्तस्माद्धेतोः कूलवालो मुनिरपि मासक्षपणादिमहातपःकर्तापि ताभिर्गणिकाभिर्हतवृत्तः चौरिताचारो भ्रष्टचारित्रोऽजनि जातः। अस्यां वार्तायां दृष्टांतमाह। वा दृष्टांतदर्शने। हिमगिरिर्हिमाचलो दृढाभिस्तीव्राभिः भानुभाभिः सूर्यकांतिभिः गलति द्रवीभवति। तथा वेश्यानां हावभावैर्मोहितचितः पुरुषः कृत्याकृत्यं न वेत्तीत्यर्थः ॥ ११३ ॥

वेश्याओना हलका हृदयने विषे अनेक छिद्रो क्यांथी थया? कारण के, ते दरेक वखते नवनवा रसने धारण करेछे. एवी वेश्याथोथीज मासक्षमणादि महातप करनारा कुलवालक मुनि व्रतभ्रष्ट थया. दृष्टांत कहे छे के, सूर्यनी तीक्ष्ण कांतिथी हिमाचल पर्वत पण गले छे. अर्थात् वेश्याना हावभावथी मोह पामेलो पुरुष कृत्य अने अकृत्यने जाणतो नथी ॥ ११३ ॥

हवे ये काव्यथी पापर्द्धिद्वार कहे छे.

(शार्दूलविक्रीडितवृत्तम्.)

व्याधो नान्यहिताय सत्यमसकृद्विश्वस्तजंतूंस्तुदन्,
न स्वस्मिन्नपि तुष्टये च्युतशरक्रोडादितोंतं व्रजन् ॥
मृत्यौ दुर्गतिमाप्नुवांश्च मृगया लोकद्वयात्यैं ततो,
गांगेयेन स शांतनुक्षितिपतिस्तस्या निषिद्धस्ततः ११४

व्याधरिति। व्याधः आखेटकी अन्यहिताय न स्यादिति सत्यं। स्वस्मिन्नपि आत्मन्यपि तुष्ट्यै संतोषाय न भवतीत्यर्थः। किं कुर्वन्। असकृद्वारं वारं विश्वस्तजंतून् विश्वासपात्रजीवान् तुदन् मारयन्। च्युतशरक्रोडादितः लक्षभ्रष्टशूकरादितः अंतं विनाशं व्रजन् गच्छन्। पुनः किं कुर्वन्। मृत्यौ मरणे सति दुर्गतिं नरकं परलोके आप्नुवांश्च प्राप्नुवंश्च। परहिताय स्वहिताय च न स्यादित्यर्थः। ततः कारणात् मृगया आखेटको लोकद्वये इहलोकपरलोकयोः अर्त्यै पीडायै स्यात्। ततः हेतो स प्रसिद्धः शांतनुक्षितिपतिः शांतनुनृपः गांगेयेन तस्याः मृगयायाः सकाशात् निशिद्धो निवारित इति ॥ ११४ ॥

ए सत्य छे के, विश्वास पमाडेला प्राणीओने वारंवार मारी नाखतो एवो पारधी अन्यना हितने अर्थे नथी। एटलुंज नहि पण बाणना प्रहार थकी गयेला सूवरादि प्राणीओथी मृत्यु पामतो ते पारधी पोते पोतानी तुष्टिने अर्थे पण थतो नथी. कारण के, मृत्यु थवाथी ते, पोते पण दुर्गतिने पामे छे. आ प्रमाणे मृगया यद्ये

लोकने विषे दुःख आपनारी छे; तेटलाज माटे गांगेये शांतनु राजाने ए मृगयाथी निवार्यो हतो ॥ ११४ ॥

पापर्द्धौ तनुमद्वधोज्झितघृणः पुत्रेऽपि दुष्टाशय-
श्चंडः खांडवपावकादपि मुधा कंकं न हन्याज्जडः ॥
किं बाणेन जरासुतो वनगतो विव्याध नो बांधवं,
प्रापोच्चैर्मुनिघातपातकभरं किं नाजराजांगजः॥११५॥

पापर्द्धाविति । पापर्द्धौ मृगयायां तनुमतां जीवानां वधे उज्झिता सक्ता घृणा दया येनस तथा तनुमद्वधोज्झितघृणः पुत्रेऽपि दुष्टाशयः विरुद्धाध्यवसायः एतादृशो जडो मुर्खः पुरुषः कं कं जीवं मुधा वृथा न हन्यात् न मारयेत् । किं रूपः जडः । खांडवपावकादपि ईश्वरसंबंधिवैश्वानरादपि चंडो रौद्रः । दृष्टांतावाह । वनगतः वनवासी जरासुतः जराकुमारः बाणेन शरघातेन बांधवं कृष्णं किं न विव्याध किं न जघान अपि तु मारयामासैव । वा पुनः अजराजांगजो दशरथो मुनिघातपातकभरं मुनिघातेन ऋपिपुत्रशरवणमुनिमारणेन पापसमूहं उच्चैरतिशयेन किं न प्राप किं न लेभे अपि तु प्रापैव ॥ ११५ ॥

मृगयाने विषे जीवोनो वध करवामां निर्दय अने खांडववनने बाली नाखनारा अग्नि थकी क्रूर एवो जड पुरुष पुत्रने विषे पण दुष्ट परिणामवालो छतो कया कया जीवोने नथी हणतो ? दृष्टांत कहे छे के, वनमां गयेला एवा पण जरासुते पोताना बांधव एवा कृष्णने शुं बाणवडे नथी हण्या ? अथवा तो दशरथ राजा मुनिहत्याना म्होटा पापने शुं नथी पाम्या ? अर्थात् पाम्या छे ॥ ११५॥

हवे वे काव्यथी चौर्यद्वार कहे छे.

चौरो दुःखमुपैति नारकसमं सत्योऽपि तत्संनिधेः,
शुष्के प्रज्वलिते हि सार्द्रमपि किं नो वन्हिना दह्यते॥
संघोल्लुंटनसज्जदग्धचरटग्रामेऽग्रितप्रजा-
मध्योत्पत्तिभवे समं सगरजैः किं किं न लेभे तदा॥११६॥

चौर इति। चौरस्तस्करः नारकसमं नारकीयसमानं दुःखं वधबंधनमारणछेदनभेदनादि कष्टमुपैति याति। सत्योऽपि अचौरोऽपि तत्संनिधेः चौरसंसर्गात् दुःखं गच्छति चौरोऽपि चौरसंसर्गकर्ताऽपि च द्वावपि दुःखं गच्छत इत्यर्थः। हि यस्मात् शुष्के प्रज्वलिते सति इह जगति सार्द्रमपि नीलमपि अग्निना वह्निना किं नो दह्यते। अपि तु ज्वाल्यत एव। तदा तस्मिन् प्रस्तावे अष्टापदपरिखाखनने सगरजैः सगरचक्रवर्त्तिपुत्रैः किं किं दुखं न लेभे अपि तु सर्वमपि दुःखं प्राप्तमेव। कथं। समं समकालं। [redacted] प्राप्तं। अग्रितप्रजामध्योत्पत्तिभवे अग्रितप्रजा तासां मध्योत्पत्तिरूपे जन्मनि। किं रूपे। संघोल्लुंटनसज्जैरत एव पूर्वभवे दग्धो ज्वालितः चरटनामा ग्रामो यत्र तथा तस्मिन्॥ ११६॥

चोर पुरुष नरकसमान दुःख पामेछे एटलुंज नहीं परंतु तेनी पासे रहेनारो अचोर पण दुःख पामे छे. जुओ, अग्निथी सुकुं बले छते तेनी साथे लीलुं पण शुं नथी बलतुं? दृष्टांत कहे छे के, अष्टापद पर्वतना फरती खाई करवाने अवसरे संघने लुंटवा तैयार थवाने लीधेज पूर्वभवे बाली मूकेला चरट नामना

अग्निथी तप्त थयेलो प्रजानी मध्ये उत्पत्तिवाला भवने विषे सगर चक्रवर्तीना पुत्रो शुं शुं दुःख नथी पाम्या ? ॥ ११६ ॥

चौर्यं स्वेन च वर्णके न च कृतं मूढा दुरंतं भवे-
द्राज्ञामंडिकशालकोऽपि न हतः किं मूलदेवेन सः ॥
किं चैतत्त्रिजगत्प्रियोऽपि मदनस्तच्चित्तचौर्योद्यतः,
शापं प्राप न किं प्रजापतिगिरा दाहं च रौद्राग्निना॥

चौर्यमिति । हे मूढाः । चौर्यं तस्करता स्वेन चात्मना वर्णकेन च स्वजनेन च कृतं तच्च दुरंतं दुर्दुःखं अंते यस्य तत् दुरंतं दुःखं भवेत् स्यात् । मूलदेवेन राज्ञा सःप्रसिद्धोऽत्यंतराज्यमान्यो मंडिकनामा शालकोऽपि किं न हतः किं न विध्वंसितः । अपि तु हत एव । एतदनंतरोक्तं किं । त्रिजगत्प्रियोऽपि लोकत्रयवल्लभोऽपि मदनः कामः तच्चित्तचौर्योद्यतस्तयोर्ब्रह्मण ईश्वरस्य च मानसचौर्यसावधानः सन् प्रजापतिगिरा ब्रह्मणो वाण्या शापं किं न प्राप । अपि तु लेभे । पुना रौद्राग्निना ईश्वरतृतीयलोचनवह्निना दाहं किं न प्राप अपि तु प्राप्तवानेव. ॥ ११७ ॥

हे मूढ पुरुषो ! पोते अथवा पोतानी ज्ञातीना पुरुषे करेली चोरी अंते दुःखदायक थाय छे. जूओ. मुलदेव राजाए पोताना शाला मंडिकने पण चोरी करवाना वांकथी शुं नथी हण्यो ? दृष्टांत कहे छे के, आ त्रणे जगत्ने प्रिय एवो कामदेव पण ब्रह्मा अने शंकरनुं चित्त चोरवाने उद्यमवंत थयो हतो शुं ब्रह्माथी शापने नथी पाम्यो ? अने शंकरना त्रीजा नेत्रना अग्निथी दहन नथी थयो ? ११७

हवे ते काव्यथी परस्त्रीद्वार कहे छे.

पुण्यापुण्यचयेन बुद्धिरमला स्यात् कश्मलाप्यंगिनां,
वातेनेव युगंधरी सदसता मुक्ताफलांगारभा ॥
लंकेशो नलकूबरप्रियतमां नाम्नोपरंभां रता-
मत्याक्षीदरतां च रामवनितां सीतां जहाराशु यत् ॥

पुण्येति । अंगिनां प्राणिनां बुद्धिः पुण्यापुण्यचयेन धर्माधर्मयोर्वृद्धिप्रकारेण पुण्यचयेन अमला निर्मला अपुण्यचयेन कश्मला कलुषी स्यात् । किदृशी स्यादित्याह । युगंधरी सदसता शोभनाशोभनेन वातेन वायुना मुक्ताफलांगारभा मुक्ताफलांगारसमानकांतिरिव । यथा शोभनेन वायुना युगंधरी मुक्ताफलाभा स्यात् असता विरुपकेन वायुना युगंधरी अंगारसदृशा स्यात् ॥ दृष्टांतमाह । लंकेशो रावणो रतां सानुरागां नलकूबरप्रियतमां नलकूबरकलत्रं नाम्ना अभिधानेन उपरंभां अत्याक्षीत् । तत्र धर्मोदयेन रावणस्य निर्मला बुद्धि रासीत् । च पुनः स एव लंकेशोऽरतां नीरागां यद्यस्मात्कारणात् पापोदयात् रामवनितां श्रीरामकलत्रं सीतामाशु शीघ्रं जहार अहरत् ॥ ११८ ॥

पुण्यना संचयथी प्राणीनी बुद्धि निर्मल थाय छे अने पापना संचयथी मलीन थाय छे. जूओ के, युगंधरी-जार सारा वायुए करीने मुक्ताफल सरखी कांतिवाळी थाय छे अने नठारा वायुथी अंगाराना सरखी कांतिवाळी थाय छे. दृष्टांत कहे छे के, रावणे पोताने विषे आसक्त थयो नल कूबरनी प्रियाने धर्मना उदयथी त्यजी दीधी अने रक्त नहि थयो सीताने पापना उदयथी शीघ्र हरण करी.

( वसंततिलकावृत्तम्. )

मूढः परस्त्रियमुपेत्य कुवाक्यबंध-
घातापकीर्तिमृतिदुर्गतिदुःखपात्रम् ॥
स्याद्ब्रह्मदारचुलनीरतदीर्घवत्किं,
लक्ष्मक्षयादि न विधोर्गुरुतल्पगस्य ॥ ११९ ॥

मूढ इति । मूढः परस्त्रियं परनारीं उपेत्य प्राप्य ईदृशः दुःखपात्रं स्यात् । कुवाक्यं कुवचनं । बंधः रज्ज्वादिना बंधनं । घातः दंडादिना ताडनं । अपकीर्तिः अपयशः । मृतिः मरणं । दुर्गतिः नरकं । इत्यादि दुःखभाजनं परस्त्रीलंपटः पुरुषो भवतीति संबंधः । किंवत् । ब्रह्मदारचुलनीरतदीर्घवत् । यथा ब्रह्मभूप कलत्रे चुलनीनाम्नि रत आसक्तः दीर्घनामा मंत्रीश्वरो मरणपात्रमभूत् । दृष्टांतमाह । गुरुतल्पगस्य गुरोर्बृहस्पतेः शय्यां गतस्य विधोश्चंद्रस्य लक्ष्मक्षयादि कलंकयक्ष्मरोगादिकं च किं नाभूत् ११९

मूर्ख माणस परस्त्री गमनथी ब्रह्मदत्त राजानी स्त्री चूलनीने विषे आसक्त थवा दीर्घ प्रधाननी पेठे, कुवाक्य, बंध, घात, अपकीर्त्ति मृत्यु, दुर्गति आदि दुःखोनुं पात्र थायछे. दृष्टांत कहे छे के, बृहस्पतिनी स्त्री साथे व्यभिचार करनारा चंद्रने शुं कलाना क्षय रूप कलंक अने क्षय रोग विगेरे नथी थयुं ? ॥ ११९ ॥

हवे ये काव्यथी कषायद्वार कहे छे.

( पृथ्वीवृत्तम्. )

सुभूमजमदग्निजप्रतिमपुंङ्गमाघर्पजे,

कषायदवपावके विषयवात्ययादीपिते ॥
महद्गुणवनं दहत्यहह पुण्यकल्पद्रुम-
स्ततोऽस्ति यदि दैवतः शमघनाघनो वर्षति १२०

सुभूमेति। अहहेति खेदे। महद्गुणवनं महतां गुणा एव वनं दहति भस्मीभवति। क। सुभूमनामा चक्रवर्त्ती जमदग्निजः परशुरामः तयोः प्रतिमाः सदृशाः पुंद्रुमाः पुरुषवृक्षास्तेषामायर्षः संघट्टस्त-स्माज्जातस्तस्मिन्। कषाय एव दवपावको दावानलस्तत्र। किंरूपे।विषया शब्दरूपरसगंधस्पर्शाः पंच त एव वात्सया वात-समूहस्तया उद्दीपिते प्रज्वालिते।ततः तस्मिन्प्रक्षे महद्गुणवने य-दि दैवतो भाग्यवशात् शम उपशम क्षमा स एव घनाघनो मेघो व-र्षति वृष्टिं करोति तर्हि पुण्यकल्पद्रुमोऽस्ति वर्त्तते ॥ १२० ॥

आठमा सुभूम चक्रवर्ती तथा परशुराम जेवा पुरुष रूप वृ-क्षाना घसाराथी उत्पन्न थयेला अने पंच विषय रूपी वायुए प्रदी-प्त करेला एवा कषाय रूपी दवाग्निने विषे महा गुण रूपी वन ब-ळी जाय छे, ते वखते जो दैवयोगे शमता रूप मेघ वरसे, तो पुण्यरूप कल्पवृक्ष त्यां रहे ॥ १२० ॥

जीवाः कषायविवशा न विचारयंति,
चाणाक्यवत्किमपि कृत्यमकृत्यमत्र ॥
कल्पांतवातविततिक्षुभितस्य पूर्ण-
रोदोंतरस्य [illegible] को विवेकः ॥ १२१ ।

जीवा इति । जीवाः कषायविवशाः कषायाः क्रोधमानमाया लोभरूपाश्चत्वारः तैर्विवशा विह्वलाः संतः चाणाक्यनाममंत्रिवत् अत्र कर्तव्यविधौ किमपि किंचिदपि कृत्यमकृत्यं करणीयाकरणीयं न विचारयंति न जानंति ॥ दृष्टांतमाह । ईदृशस्य जलधेः समुद्रस्य ननु निश्चितं को विवेको विचारः स्यात् । अपि तु न कोऽपि विचारः। कीदृशस्य जलधेः । कल्पांतकालस्य वातवितत्या वायुसमूहेन क्षुभितस्य क्षोभं प्रापितस्य । पुनः किदृशस्य । पूर्ण रोदोंतरं पृथिव्याकाशयोर्मध्यं येन स तथा तस्य । द्यावापृथिव्यो तु द्यावाभूमी द्यावा तु रोदसीति वचनात् ॥ १२१ ॥

क्रोध, मान, माया अने लोभ ए चार कषायथी विह्वल थयेला जीवो चाणाक्यनी पेठे कृत्य अथवा अकृत्यने जाणता नथी. दृष्टांत कहे छे के, कल्पांतकालना पवनना समूहथी क्षोभ पामेला अने पृथ्वी तथा आकाशना अंतरने पूर्ण करनारा समुद्रने शुं विवेक होय खरो ? अर्थात् न होय. ॥ १२१ ॥

हवे बे काव्यथी क्रोधद्वार कहे छे.

( स्रग्धरावृत्तम् )

मिष्टान्नं भुंक्ष्व हृद्यं पिब जलमपि तान् षड्रसान् मा च रुंद्धि,
कायक्लेशं त्यजांगं विमलय सुकरः क्रूरकुंभर्षिणोक्तः ॥
मोक्षोपायोऽस्ति कोपं जय भज शिवजं शर्म साधो निबोध,
द्राक्षेक्षुक्षीरखंडप्रभृतिरसवलात्संनिपातेऽप्यदुष्टम् ।। १२२।

मिष्टान्नमिति । हे साधो । निबोध जानीहि । मिष्टान्नं सुखम-

धुरं मोदकादिकं सरसमाहारं भुक्ष्व भक्षय। हृद्यं मनोज्ञं कर्पूरएलावासितं जलमपि पानीयमपि पिव। च पुनः तान् प्रसिद्धान् खादिमादि षड्रसान् मा रुंद्धि । कायक्लेशं शरीरकष्टं त्यज मुंच । अंगं शरीरं विमलय प्रक्षालय जलादिना। क्रूरकुंभर्षिवर्णोक्तः क्रूरकुंभर्षिणा प्रोक्तः मोक्षोपायः मोक्षगमनप्रकारः सुकरः सुखेनकर्तुं शक्योऽस्ति। उपायं दर्शयति। कोपं जय शिवजं मोक्षोत्पन्नं शर्म सुखं भज आश्रय। दृष्टांतमाह। द्राक्षा हारहूरा। इक्षुः प्रसिद्धः। क्षीरं पयः । खंडः शर्करा प्रभृतिरसवलात् प्रमुखरससामर्थ्यात् अदुष्टं यथा स्यात् तथा संनिपातोऽमलो भवति ॥ १२२ ॥

हे साधु ! मनोहर एवा मिष्टांनतुं भोजन कर, जलपान कर. छ प्रकारना रसनो अनुभव ले, कायक्लेशनो त्याग कर, अंग निर्मल कर. परंतु क्रूरकुंभ मुनिए मोक्षनो सहेलो उपाय बताव्यो छे ते ए जाणजे के, फक्त क्रोधनो पराजय कर एटले मोक्षसुख प्राप्त थयुं. दृष्टांत कहे छे के, द्राक्ष, शेरडीनो रस, दुध अने साकर ए सर्व रसवलने लीधे पकडुं थाय तो पण खराब थतुं नथी. १२२

( मालिनीवृत्तम्. )

यदि शिवगतिरिष्टा सार्यमेतार्यवत्त-
ज्जय रुपमुपसर्गेऽपीप्सिता दुर्गतिश्चेत् ॥
करडकुरम्यवत्क्रोधमुच्चैर्विधेहि,
सुरतरुकनकद्रोर्यो मतस्तं भजस्व ॥ १२३ ॥

यदीति। यदि सा प्रसिद्धा शिवगतिः मोक्षगतिः इष्टा वल्ल-

भास्ति तर्हि आर्यः सरलः मेतार्यनामा मुनिस्तद्वत् उपसर्गेऽपि कष्टेऽपि रुपं कोपं जय क्षमां कुरु.यदि दुर्गतिरीप्सिता चेत्तर्हि करडकुरडमुनिवत् उच्चैरतिशयेन क्रोधं विधेहि कुरु। सुरतरुकनकद्रोः कल्पवृक्षधत्तूरकयोर्मध्ये यो मतोऽभीष्टस्तं कल्पद्रुमं धत्तूरकं वा भजस्व आश्रय ॥ १२३ ॥

जो तुं मोक्षगतिने इच्छतो होय तो मेतार्य मुनिनी पेठे उपसर्गने विषे पण क्रोधनो पराजय कर अने जो दुर्गतिने इच्छतो होय तो करडकुरड मुनिनी पेठे अतिशय क्रोध कर. एक कल्पवृक्ष छे अने बीजुं धंतुरानुं झाड छे ते बन्नेमांथी जे तने गमे तेनो स्वीकार कर ॥ १२३ ॥

हवे ये काव्यथी मानद्वार कहे छे.

( वसंततिलकावृत्तम्. )

मानी तपःश्रुतशमव्रतधर्महीनः,
स्यान्नंदिषेण इव पण्यवधूपहासे ॥
किं तारकः कमलभूवरदुर्द्धरोऽपि,
नाकारि शंभुशिशुना हृतसर्वगर्वः ॥ १२४ ॥

मानीति। मानी अहंकारी पुरुषः। तपसा श्रुतेन शमेन व्रतेन धर्मेण च हीनो रहितः स्यात्। यथा नंदिषेणः पण्यवधूपहासे वेश्याहासे सति तपःश्रुतादिना रहितो जातः। दृष्टांतमाह। कमलभूर्ब्रह्मा तस्य वरेण प्रसादेन दुर्द्धरोऽपि अजय्योऽपि तारकः

तारकनामा दैत्यः शंभुशिशुना कार्तिकेयेन हृतसर्वगर्वः हृतोऽपहृतः सर्वः समस्तो गर्वोऽहंकारो यस्य स तथा ईदृशः किं नाकारि अपि तु कृत एव ॥ १२४ ॥

जेम वेश्याये करेला उपहासने लीधे नंदिषेण मुनि तप श्रुतादिकथी भ्रष्ट थया तेम अभिमानी माणस तप, श्रुत, शम, व्रतरूपी धर्म रहित थाय छे. दृष्टांत कहे छे के, ब्रह्माना वरदानथी दुर्जय एवा तारकासुरने शुं शंभुपुत्र कार्तिकस्वामीये गर्वरहित नथी कर्यो ?

स्वस्यापरस्य च बलान्यविचिंत्यमानः,
शक्राभ्यमित्रचमरेंद्रवदापदे स्यात् ॥
शुक्रःकदाचिदिह चेत्तनुते प्रकाश-
लेशं ततः स्थगयतींदुमहो महत्किम् ॥१२५॥

स्वस्येति । स्वस्य आत्मीयस्य अपरस्य च बलानि अविचिंत्यमानः अनवधारयमानः सन् आपदे कष्टाय स्यात् । किंवत् । शक्राभ्यमित्रचमरेंद्रवत् । शक्र इंद्रस्तं प्रति प्रस्थितशत्रुचमरेंद्रवत् । दृष्टांतमाह । चेद्यदि शुक्रो दैत्यगुरुरिह जगति कदाचित् प्रकाशलेशं कांतिलवं तनुते विस्तारयति ततस्तर्हि महत् गरिष्ठमिंदुमहः चंद्रकांतिः किं स्थगयति किं आच्छादयति अपि तु न स्थगयति १२५

पोताना अने परना बळनो विचार नहि करनारो माणस शक्रेंद्रनी सामा युद्ध करवा गयेला शत्रु चमरेंद्रनी पेठे दुःखी थाय छे. दृष्टांत कहे छे के, शुक्रनो तारो आ लोकमां मंद प्रकाश करे तो तेथी ते शुं चंद्रनी ज्योत्स्ना तेजने ढांकी शके खरो ? ॥ १२५ ॥

हवे वे काव्यथी मायाद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

मायादुर्गतिकृद्भवेत् परभवे क्लेशाय वास्मिन् पुनः
श्रीवीरेण सुरोऽपि कैतवसखा कुब्जिकृतो मुष्टिना ॥
किं कर्णस्य न निष्फला युधि कला विप्रच्छलात्ताऽभवत्।
किं श्रीशो न जगाम वामनतनुर्दैन्यं बलेर्बंधनम्॥१२६॥

मायेति। माया कपटं परभवे परलोके दुर्गतिकृत् नरककारिणी भवेत् स्यात्। वास्मिन् भवे इहलोके पुनः क्लेशाय पीडायै स्यात्। श्रीवीरेण कैतवेन कपटेन सखा कैतवसखा सुरोऽपि माया-मनुष्यरूपधारी देवोऽपि मुष्टिना मुष्टिप्रहारेण कुब्जीकृतो वामनीचक्रे। दृष्टांतद्वयमाह। कर्णस्य कला युधि संग्रामे किं निष्फला फलरहिता न अभवत् न बभूव। कथं भूता कला। विप्रच्छलेन ब्राह्मणवेशेन आत्ता स्वीकृता। श्रीशः श्रीकृष्णः बलेः दैन्यं याचकत्वं वा बंधनं किं न जगाम न प्राप अपि तु जगामेव। कथंभूतः श्रीशः। वामनतनुः ह्रस्वशरीरः॥ १२६॥

माया आ भवने विषे दुःखदायी अने परभवने विषे नरकगति आपनारी छे. कपटथी मित्र थयेला देवताने पण श्रीवीरप्रभुए मुष्टिथी कुब्ज करी नाख्यो हतो. दृष्टांत कहे छे के, परशुराम पासेथी ब्राह्मणनुं छल करीने अभ्यास करेली, करणनी कला शुं युद्धने विषे निष्फल नथी थइ ! अथवा तो वामनरूप धारण करनारा श्रीविष्णु बलिनां बंधनने अने याचकपणाने नथी पाम्या ?

( स्रग्धरावृत्तम्. )

सर्वेऽप्येते कषायाः शदृसवलभृतः किं तु तीव्रैव माया,
जित्वा याऽऽषाढभूतिं नटमिव नटयामास गौरीव रुद्रम् ॥
स्त्रीत्वं स्त्रीलिंगभावादिह नृषु न ददौ मल्लिमुख्येषु या किं,
सत्यं दुर्दांतदैत्यं कपटसुरमणीरूपविष्णुर्जघान ॥१२७॥

सर्व इति । एते सर्वेऽपि चत्वारोऽपि कषायाः सदृशं समानं बलं सामर्थ्यं बिभ्रतीति सदृशबलभृतः समानबलधारिणः संति । किं तु पुनर्माया तीव्रैव उत्कटैवास्ति । या माया आषाढभूतिनामानं मुनिं जित्वा स्ववशमानीय नटमिव नटयामास विडंबयामास । केव । गौरी पार्वती रुद्रमिव । यथा पार्वती ईश्वरं नर्त्तयति । इह जगति या माया मल्लिमुख्येषु मल्लिनाथतीर्थंकरादिषु नृषु मनुष्येषु स्त्रीलिंगभावात् स्त्रीवेदसद्भावात् स्त्रीत्वं किं न ददौ अपि तु स्त्रीवेदमदात् । दृष्टांतमाह । एतत्पूर्वोक्तं सत्यमेवं । कपटसुरमणीरूपविष्णुः कितवयुगदस्त्रीरूपनारायणः दुर्दांतदैत्यं क्रोद्धोद्धतं दैत्यं जघान हतवान्

आ सर्वे कषायो समान बलवाला छे, परंतु तेमां माया सर्वथी भयंकर छे. कारण के, जेम पार्वतीये शीवने नचाव्या ते प्रमाणे ते मायाये आषाढभूतिने जीतीने नटनी पेठे नचाव्या छे. वळी जे मायाये पोते स्त्रीजाति होवाथी आ लोकमां मल्लिनाथ आदिने पण शुं स्त्रीपणुं नथी आप्युं? ए सत्यज छे के, कपटथी सुंदर स्त्रीनुं रूप लइने विष्णुए दुर्दांत एवा दैत्यने हण्यो छे ।१२७।

हवे बे काव्यथी लोमद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

लोभी तृप्यति नो घनैरपि धनैरिच्छन्नवं स्वं नवा-
द्यप्याद्यः पितृकल्पितानुजपदं किं वार्षभिर्नाच्छिदत् ॥
अश्रांतं सरितां शतैरपि भृतः किं वांबुधिः पूर्यते,
किं वा शाम्यति काष्टकोटिभिरपि ज्वालाकरालोऽनलः

लोभीति । लोभी लोभवान् पुरुषः घनैरपि धनैर्बहुभिरपि द्रव्यैः कृत्वा न तृप्यति न संतोषं याति । किं कुर्वन् । नवान्नवं स्वं द्रव्यं इच्छन् वांच्छन् । आद्यः प्रथमः वार्षभिः ऋषभस्यापत्यं श्रीआदिनाथस्य पुत्रो भरतः पितृकल्पितानुजपदं पित्रा श्रीआदिनाथेन कल्पितं दत्तं अनुजानां लघुभ्रातॄणां बाहुबल्यादीनां पदं राज्यं किं न आच्छिदत् किं न जग्राह । अपि तु आच्छिददेव । लौकिकदृष्टांतद्वयमाह । अंबुधिः समुद्रः अश्रांतं निरंतरं सरितां शतैः नदीनां शतसंख्याभिः भृतः पूरितः सन् किं पूर्यते अपि तु न पूर्यते । वा पुनः ज्वालाभिः करालो रौद्रोऽनलोऽग्निः काष्टकोटिभिरपि किं शाम्यति उपशमं गच्छति अपि तु न शाम्यति ॥ १२८ ॥

नवा नवा द्रव्यनी इच्छा करतो थको लोभी पुरुष बहु द्रव्यथी पण तृप्ति पामतो नथी. पिताए आपेला न्हानाभाइ बाहुबलि विगेरेना राज्यने शुं भरत चक्रवर्तीए नथी छिनावी लीधां? दृष्टांत कहे छे के, निरंतर सेंकडो नदीयोथी पूरातो थको पण समुद्र शुं

पूर्ण थाय छे ? अथवा तो कोटीबंध लाकडां नाखवाथी पण ज्वालाथी विकराल एवो अग्नि शुं शांत थाय छे ? ॥ १२८ ॥

( स्रग्धरावृत्तम्. )

चित्तावन्यां जनानां कपिलसमधियां वित्तलेशाप्तिमूलः,
प्रत्याशावारिसिक्तो धनिविविधधनप्रार्थनाभोगवल्गुः॥
भूपेंद्रत्वादिसंपन्मतिकुसुमततिर्भोगचिंताफलर्द्धि-
र्लोभो धृत्याश्रवंत्या व्रजतु कलितरुर्वभ्रुरप्यार्तिहेतुः॥१२९॥

चित्तेति । लोभस्तृष्णा स एव कलितरुः क्लेशवृक्षः व्रजतु गच्छतु नाशं यात्वीत्यर्थः । कया नाशं यातु । धृति संतोषः सैवाश्रवंती नदी तया । किं रूपः । कपिलब्राह्मणस्य समा सदृशा धीर्बुद्धिर्येषांते कापिलसमधियः तेषां जनानां चित्त एवावनिः पृथ्वी तस्यां वित्तलेशस्य द्रव्यांशस्य आप्तिः प्राप्तिरेव मूलं यस्य स तथा । पुनः किं भूतः । प्रत्याशावारिसिक्तः प्रत्यासयैव वारिणा जलेन सिक्तः सिंचितः । पुनः किं विधः । धनिनां लक्ष्मीवतां विविधधनप्रार्थना बहुविधद्रव्ययाचा तद्रूपो यो भोगोविस्तारस्तेन वल्गुः प्रधानः॥ पुनः किं विधः । भूपत्वं नृपत्वं । इंद्रत्वं देवाधीशत्वं । इत्यादि संपन्मतिरेव कुसुमततिः पुष्पश्रेणिर्यत्र स तथा । पुनः किं विधः । भोगचिंता विषयविचार एव फलर्द्धिः फलसंपत्तिर्यत्र स । पुनः किं विधः । बभ्रुः कर्तुरपि आर्तिहेतुः पीडाकारणमिति ॥ १२९ ॥

कपिल समान बुद्धिवाला माणसोनां हृदयरूप पृथ्वीने विषे द्र-

व्यना लेशनी प्राप्तिरूप मूल छे जेनुं एवुं, आशारूप जलथी सिंचित थयेलुं, धनवंतोनी विविध प्रार्थना रूप जे थड तेणे करीने मनोहर, नृप अने इंद्रादिकनी संपत्ति रूप पुष्पनी पंक्तिवालुं, भोगनी चिंता रूप फलसमृद्धिवालुं, अने वाचनारने ,पण पीडानुं कारण एवुं जे, लोभरूप क्लेशवृक्ष ते संतोष रूप नदीथी तणाइ जाओ. १२९

अहिंयां सुकृतना दिवसने विषे सत्कर्मना बीजा द्वार कहेछे.

हवे वे काव्यथी पर्यांतमाथमणद्वार कहे छे.

स्वर्भूमेर्मातृगर्भेऽगमदुदयमहो यः सुरैर्मेरुशैले,
सिक्तस्ताताऽलयेऽगादुपचयमनिशं छायया क्रांतविश्वः।
पादोपांते च नम्रत्रिभुवनजनतास्वीकृतोच्चैर्फलर्द्धिः,
श्रीवीरो वोऽस्तु चिंताधिकतरवरदः कल्पशाखी नवीनः

स्वर्भूमेरिति । श्रीवीरः श्रीवीरप्रभुर्नवीनः कल्पशाखी कल्पवृक्षो वो युष्माकं चिंताया अधिकतरं वरं ददातीति एवंविधोऽस्तु। कीदृशः कल्पशाखी । यः स्वर्भूमेः देवलोकसकाशात् मातृगर्भे त्रिशलाजननीकुक्षौ उदयं वृद्धिमगमज्जगाम। अहो इत्याश्चर्ये । सुरैर्देवैर्मेरुशैले मेरुपर्वते सिक्तः स्नापितः अभिसिक्तःसन् तातालये सिद्धार्थभूपतिगृहे अनिशं निरंतरमुपचयं पोषमगात् पुष्टिं जगाम। किंरूपः। छायया लक्ष्म्या क्रांतंविश्वं येन ॥ तथा । पुनः किंरूपः। पादोपांते पादतलसमीपेऽवनम्रायै नमनशीलायै त्रिभुवनजनतायै स्वीकृतांगीकृता उच्चैरतिशयेन फलर्द्धिः फललक्ष्मीर्येन स तथा। श्रीवीरस्य कल्पवृक्षेण सार्द्धं किंचित्सादृश्यं किंचिदधिकता च । अतो नवीनः कल्पवृक्षो वीर इति ॥ १३० ॥

जे स्वर्गथी आवीने माताना गर्भने विषे वृद्धि पामेल छे; जेमने देवताओए मेरुपर्वत उपर अभिषेक करेलो छे; जेमनां तेजथी त्रण लोक व्याप्त थई रह्यां छे; जे पिताने घेर निरंतर वृद्धि पाम्या छे; जेमणे पोताना चरणनी पासे नमन करता त्रण लोकनां प्राणीना समूहने माटे उंचो फल समृद्धि मेळवी छे ते श्री वीरप्रभुरूप नवीन कल्पवृक्ष अमने इच्छाथी अधिक वर आपनारा थाओ. १३०

स्युर्द्वात्रिंशत्सहस्रा भरतजनपदाः सार्द्धपंचाग्रविंश-
त्यार्येष्वर्हत्प्रबोधः सुगुरुभिरधुना पंचषेष्वस्ति धर्मः ॥
सत्क्षेत्रं तत्र चाल्पं लवणभुवि यथा पल्वले ग्रीष्मतुच्छे,
पद्मं हंसस्य तुष्ट्यै तदिह बहुगुणे सच्चतुर्मासकं नः १३१

स्युरिति । भरतस्य भरतक्षेत्रस्य जनपदा देशा द्वात्रिंशत्सहस्राः संति । तेषु सार्धपंचाग्रविंशसार्यदेशेषु अर्हत्प्रबोधो जिनमतिबोधोऽस्ति । अधुना सांप्रतं तेषां सार्द्धपंचविंशतिदेशानां मध्ये पंचषेषु पंचषट्केषु प्रमाणेषु देशेषु सुगुरुभिः सुविहिताचार्यैः कृत्वा धर्मोऽस्ति धर्मो विद्यते । तत्र पंच षट्केषु देशेषु सत्क्षेत्रं प्रधानग्रामनगरादिकं अल्पं स्तोकं वर्तते । कस्मिन्निव किं । लवणभुवि लवणभूमिकायां ग्रीष्मतुच्छे उष्णकालेन स्तोकीभूतजले पल्वले सरोवरे पद्मं कमलं यथा । तत्तस्मादिह बहुगुणे नानाधर्मादिगुणोत्पादके क्षेत्रे सच्चतुर्मासकं नोऽस्माकं हंसस्य जीवस्य हंसराजस्य तुष्ट्यै संतोषायास्तु । सरसि पद्मं यथा हंसस्य तुष्ट्यै भवति तथा १३१

छीपचिस हजार आर्यदेशोमां अरिहंतनो प्रतिबोध छे. तेनी अंदर पांच छ देशोने विषेज हालमां सुविहित गुरुओ धर्मश्रवण करावे छे. ते पांच छ देशोनी अंदर पण, खारी भूमिमां उनालाने लीधे थोडा जलवाला बनी गयेला तलावने विषे कमलनी पेठे सम्क्षेत्र ( प्रधान गाम नगरादिक ) बहु थोडुं छे. माटे आ बहु गुणवाला क्षेत्रने विषे प्रधान एवुं चोमासुं अमारा जीवती तुष्टिने माटे थाओ.

हवे बे काव्यथी प्राघुर्णकवंदनद्वार कहे छे.

( आर्यावृत्तम्. )

यन्नश्चिरं विहाराज्जिननतिपुण्यं तदाशु वोऽत्राभूत् ॥
कर्पुकशालेर्यत्नाद्वर्द्धकिशालेर्द्रुतं तु फलम् ॥१३२॥

यदिति । प्राघुर्णकवंदनकोद्यतानां लोकानां पुरतो गुरव उपदिशंति । हे उत्तमलोका ! यन्नोऽस्माकं चिरं विहारात् चिरकालविहारक्रमणात् जिननतिपुण्यं जिननमस्कारपुण्यं जातमिति शेषः । तत्पुण्यं अत्र प्राघुर्णकवंदनके दीयमाने सति वो युष्माकं आशु शीघ्रं अभूज्जातं ॥ अत्र दृष्टांतमाह । कर्पुकस्य कर्षकारकस्य शालिर्धान्यं तस्य यत्नात् वपनादिप्रकाराच्चिरं फलं स्यात् । तु पुनः वर्द्धकिनामा चक्रवर्त्तिसूत्रधाररत्नं तस्य शालेर्व्रीहिः फलं द्रुतं शीघ्रमेव वपनकालमुहूर्त्तादेव फलं भवति ॥ १३२ ॥

हे भव्यजनो ! पृथ्वी उपर विहार करता जिनेश्वरने नमस्कार करवाथी जे पुण्य अमे बहुकाले मेळव्युं ते पुण्य तमे ( साधुओने वंदन करता) शीघ्र मेळव्युं. दृष्टांत कहे छे के —

फल थावसुं विगेरे करवाथी बहुकाले मले छे अने घर्द्धकी रत्नना धान्यनुं फल तुरत मले छे. ॥ १३२ ॥

कृतकर्म कर्ममर्मच्छिदे भवेद्भावतोऽन्यथा श्रांत्यै ॥
पुण्याधिकनिःपुण्यककृतकामदमंत्रसाधनवत् १३३

कृतकर्मेति । कृतकर्म वंदनकं भावत एव गुरूणां पादे दत्तं सत् कर्ममर्मच्छिदे अष्टविधकर्ममर्मच्छेदनाय भवेत् । अन्यथा भावं विना वंदनकं दत्तं सत् श्रांत्यै श्रमाय भवति । किंवत् । पुण्याधिकनिःपुण्यककृतकामदमंत्रसाधनवत् । पुण्याधिकश्च निःपुण्यकश्च पुण्याधिकनिःपुण्यकौ ताभ्यां कृतं कामदमंत्र साधनं तद्वत् । यथा पुण्याधिकेन पुरुषेण कृतं कामदस्य मनोभीष्टदायकस्य मंत्रस्य साधनं भावतो दारिद्र्यविध्वंसायाभवत् । यथा च निःपुण्यकेन भावं विनैव कृतं मंत्रसाधनं तस्यैव श्रमायाभवत् दारिद्र्यं न गतं श्रम एव जातः

जेम पुण्यवंत पुरुषे भावथी करेलुं इच्छापुरक मंत्रनुं साधन दारिद्रनो नाश करनारुं थाय छे अने अपुण्यवंत पुरुषे भाव विना करेलुं इच्छापुरक मंत्रनुं साधन श्रमने माटे थाय छे तेम भावथी करेलुं वंदनादिक कर्म आठ प्रकारना कर्मना मर्मने छेदनारुं थाय छे अने भाव विना करेलुं वंदनादि कर्म केवल श्रमने माटे थाय छे. १३३

( हवे बे काव्यथी आषाढचतुर्मासद्वार कहे छे. )

(शार्दूलविक्रीडितवृत्तम्.)

राजा विश्वहितो जिनो नयपरा व्यापारिणः श्रावकाः,
स्थाने सर्वगुणोज्ज्वलेऽत्रशमिनः कौटुंबिकास्ते

जैनाज्ञागुणपत्रदत्तविधिना वर्षासु तेन स्थिता,
ज्ञानक्षेत्रमुपास्महे बहुमिथः स्याद्येन पुण्यं धनम् १३४

राजेति। अत्र सर्वगुणोज्वले समस्तगुणनिर्मले स्थाने क्षेत्रे विश्वहितो विश्ववात्सल्यकारी जिनो राजा। नयपरा न्यायैकनिष्ठाः श्रावका व्यापारिणो मंत्रीश्वरादयः। शमिन उपशमवंतो महात्मनः कौटुंबिका मुनिरूपाः कर्षकलोकास्ते वयं राजपुरुषाश्च। तेन कारणेन जैनाज्ञागुण एव पत्रं विप्णं तत्र दत्तविधिना कृत्वा वर्षासु वर्षाकाले स्थिताः संतःज्ञानमेव क्षेत्रं उपास्महे सेवामहे। येन ज्ञान क्षेत्रेण मिथः परस्परं अस्माकं लोकानां च पुण्यं पवित्रं वा पुण्य मेव धनं द्रव्यं बहु प्रचुरं स्यात् ॥ १३४ ॥

आ सर्व गुणथी उज्वल एवा क्षेत्रने विषे विश्वने हितकारी एवा जिनेश्वररूप राजा, न्यायमां तत्पर एवा श्रावकोरूप मंत्री विगेरे अने उपशम धारी एवा अमे खेडुत लोको ( राजपुरुषो ) छीए, एज कारणथी जिनाज्ञा गुणरूप पत्रमां कहेली आधाररूप विधिये करी वर्षाकालने विषे अमे परस्पर ज्ञानरूप खेतरने खेडीये छीए के, जेथी पुण्यरूप पुष्कल द्रव्य प्राप्त थाय ॥ १३४ ॥

फुल्लक्रोधविषद्रुमं बहुरजो मानप्रचंडानिलं,
मायोद्यन्मृगतृष्णिकं परिलसल्लोभाब्धिमापत्रिधिम् ॥
भिंदन्मोहनिदाघकालमभितः सद्धर्म...
भ्रांतिश्रांतिभिदेऽस्तु वो नव...

फुल्लेति ॥ नवयनो नवः...

तुर्मासकं सद्ध्यानमेव वृष्टिर्वर्षणं तया वो युष्माकं भवे संसारे भ्रांतिर्भ्रमणं तया श्रांतिः श्रमस्तस्य भिदे छेदनायास्तु भवतु । अन्योऽपि मेघो वृष्ट्या तापश्रांतिच्छेदको भवति । किं कुर्वन् । अभितः सामस्त्येन मोह एव निदाघकाल उष्णकालस्तं भिदन् छिंदन् । कीदृशं मोहनिदाघकालं । फुल्लत् पुष्प्यत् क्रोध एव विषद्रुमो धत्तूरको यत्र तं । अत्र तु मोहे सति क्रोधो वर्तते निदाघे च धत्तूरकः। पुनः कीदृशं मोहनिदाघकालं । बहुरजः पापरूपधूलिश्च यत्र स तं। मानो गर्व्वः स एव प्रचंडो महान् अनिलो यत्र तं । मोहे बहु पापं मानश्च भवति । निदाघे च महाधूलिसहितोऽसंतवायुः स्फुरति । पुनः कीदृशं । मायैवोद्यती मृगतृष्णिका मरुमरीचिका यत्र स तं। पुनः किंभूतं । परिलसल्लोभ एव अब्धिः समुद्रो यत्र स तं । पुनः कीदृशं । आपदां संतापादीनां निधिः स्थानं । निदाघे मरुमरीचिकाज्ञानं स्यात् वायुना च रज उड्डीयते समुद्रश्च वर्द्धते । मोहे तु कषायाश्चत्वारोऽपि वर्द्धंते ॥ १३५ ॥

प्रफुल्लित थयां छे क्रोधरूपी धंतुराना झाडो जेमां, बहु पापरूप उडती छे धूळ जेमां, मानरूप प्रचंड पवनवाळा, मायारूप प्रगट थइ छे मृगतृष्णा जेमां, उच्छळी रह्यो छे लोभरूप समुद्र जेमां अने आपत्तिओना भंडार एवा मोहरूप उनाळाना समयने उत्तम ध्यानरूप वृष्टिथी भेदी नाखतुं एवुं नवीन मेघरूप आषाढ चोमासुं, तमारा संसारमां भ्रमण करवारूप श्रमने दूर करो ॥ १३५ ॥

हवे बे काव्यथी पारणकद्वार कहे छे.

( मालिनीवृत्तम्. )

प्रतिदिनमपिदानं पुण्यसंपन्निदानं,

पुनरधिकफलं स्यात्पारणाहोत्तराहे ॥
दिशति जलभृदन्नं कृतिकादौ सुवृष्टः,
पुनरमलमनर्घ्यं मौक्तिकं स्वातियोगे ॥ १३६ ॥

प्रतिदिन मिति । दानं प्रतिदिनं सर्वदा पुण्यसंपन्निदानं धर्मलक्ष्मीकारणं भवति । पुनरपि पारणाहोत्तराहे उत्तरपारणकदिने दानं अधिकफलं स्यात् । दृष्टांतमाह । जलभृन्मेघः कृत्तिकादौ नक्षत्रे सुवृष्टः सन् अन्नं शाल्यादिधान्यं दिशति ददाति । पुनरपि स्वातियोगे स्वातिनक्षत्रे [ शुक्ते शुक्तादौ ] सुवृष्टः सनमलं निर्मलं अनर्घ्यं मौक्तिकं अमूल्यं मुक्ताफलं दिशति ददाति ॥१३६॥

निरंतर आपेलुं दान धर्म लक्ष्मीनुं कारण छे, परंतु उत्तर पारणाने दिवसे आपेलुं दान अधिक फलवालुं होय छे. दृष्टांत कहे छे के, कृतिका नक्षत्रने विषे वरसेलो मेघ शाली विगेरे धान्य आपेछे; परंतु स्वाति नक्षत्रमां वरसेलो मेघ तो निर्मल एवां अमूल्य मुक्ताफल आपे छे ॥ १३६ ॥

जितभवदकषायः पाक्षिकादेर्दिनोऽग्र्यो,
वितरणकरणैः प्राक्पश्चिमावप्युदारौ ॥
विहितभुवनमुक्तिः पार्वणश्चंद्र एकः
तदितरशशिनौ किं नो मुहुर्त्तप्रकाशौ ॥१३७॥

जितेति । पक्षे निवृत्तं भवं वा पाक्षिकं तदादेर्दिनो दिवसोऽग्र्यः प्रधान एव । किंरूपो दिनः । जितो भवदः संसारदायकःकषायः

क्रोधादिर्येन स तथा । यदुक्तं । "अष्टमी अष्टकर्म नाशिनी सिद्धिलाभा चतुर्दशी " इत्यादिकैः कृत्वा वित्तरणं विधिविधानं पुण्यदानं तस्य करणैः कर्तव्यैः प्राक्पाश्चिमौ अग्रेतनपाश्चात्यौ द्वावपि दिनौ उदारौ प्रशस्यफलदायिनौ भवतः । पारणकदिनोत्तरपारणकदिनत्वात् । एतदेव दृष्टांतेन दृढयति । पर्वणि भवः पार्वणः पार्वणश्चंद्रमाः किं एक एव विहितभुवनमुत्किं विहितः कृतो भुवनस्य मुद् हर्षो येन स एतादृशः स्यात् । तदितरशशिनौ पार्वणचंद्रादन्यौ शुक्लचतुर्दशीचंद्रः प्रतिपच्चंद्रश्चैतौ द्वौ चंद्रौ मुहूर्त्तं यावत् न विद्यते प्रकाशो ययोस्तौ तथाभूतौ विहितभुवनमुदौ किं नो भवतः अपि तु हर्षदौ भवतः । एतावता शुक्लचतुर्दशीचंद्रपार्वणचंद्रप्रतिपच्चंद्रास्त्रयोऽपि हर्षदाः स्युः तथोत्तरपारणकदिनपाक्षिकदिनपारणकदिनानि त्रिण्यपि पापविध्वंसकानि स्युः ॥ १३७ ॥

जीवो छे संसारदायक क्रोधादि कषाय जेणे एवो पर्वथी (आठम अथवा चौदश विगेरे) जे दिवस श्रेष्ठ छे. वली पारणानो अने उत्तरपारणानो दिवस विधिविधानना करवापडे करीने (ते पर्व्वीनो प्रथमनो अने पछीनो एम बन्ने दिवसनो) पण उत्तम फल आपनारा छे. दृष्टांत कहे छे के, शुं पर्वणि-पुनमनो चंद्रमा एकज भव लोकने हर्ष करनारो छे. तेना (पर्वणिना चंद्र) विना फक्त बेज घडीना प्रकाशवालो शुक्ल चौदशनो चंद्रमा अथवा तो कृष्ण पक्षनो चंद्रमा एम बन्ने चंद्रो अवलोकने हर्ष करनारा थता नथी के शुं ? अर्थात् तेओ पण हर्षकारी थाय छे.

हवे ये व्याख्यथी व्याख्यारंभ द्वार कहेछे.

( शार्दूलविक्रीडितवृत्त. )

व्याख्यानश्रवणं सदैव हि मुदे पीयूषपानं यथा,

वर्षास्वस्य पुनर्विशेषमहिमा यद्वन्मयूरध्वनेः ॥
तद्भव्या इह कुत्रिकापणनिभे पूज्यप्रसादोदयात्,
दानाद्यं गणिमादिवस्तुवदलं गृह्णंतु पुण्यर्द्धये ॥१३८॥

व्याख्यानेति । हि निश्चितं व्याख्यानश्रवणं सदैव मुदे ह-र्षाय भवति । पीयुषं अमृतं तस्य पानं यथा सदैव क्रियमाणं ह-र्षाय स्यात् । वर्षासु वर्षाकालेषु अस्य व्याख्यानश्रवणस्य पुन-र्विशेषेण महिमा भवति । कस्येव । मयूरध्वनेर्यद्वत् बर्हिशब्दस्येव । यथा वर्षाकाले मयूरशब्दस्य विशेषप्रभावो माधुर्यं च स्यात् । य-दुक्तं । समय एव करोति बलाबलं, प्रणिगदंत इतीव शरीरिणां ॥ शरदि हंसरवा परुषीकृतस्वरमयूरमयूरमणीयतां ॥ १ ॥ तत्त-स्मात् कारणात् हे भव्याः । कुत्रिकापणनिभे क्रयाणकहट्टसदृशे इह व्याख्यानश्रवणे पूज्यप्रसादोदयात् देवगुर्वादिप्रसादवृद्धितः पुण्यर्द्धये धर्मसमृद्धये दानाद्यं दानशीलतपोभावरूपं । गणिमादि वस्तुवत् पूगीफलादिद्रव्यवत् अलमत्यर्थं गृह्णंतु अंगीकुर्वंतु भवंत-रिति शेषः ॥ १३८ ॥

जेवी रीते अमृतनुं पान हर्षने माटे छे तेवी रीते निरंतर व्याख्याननुं सांभळवुं पण निश्चे हर्षने माटे छे. वळी जेवी रीते वर्षा ऋतुमां मयूरनो शब्द विशेषे आनंद आपनारो छे तेवी रीते वर्षा-ऋतुमां व्याख्याननुं सांभळवुं पण विशेष प्रभाववाळुं छे; माटे हे भव्यजनो! तमे क्रय विक्रय करवाना हाट समान ते व्याख्यानने सांभळवामां देवगुरुनी प्रसन्नतार्थी धर्मरूप समृद्धिने माटे दान, तप अने भावनाने सोपारीप्रमुख वस्तुनी पेठे खरीद करो ॥१३८॥

वर्षांतर्बहुवर्द्धिनो नवरसैर्जाड्यक्रुधौर्वच्छिदः,
शश्वच्छ्रीजिनसन्निधेरभिनवाद्व्याख्यानरत्नाकरात् ॥
मादृग्वाग्लहरीस्फुटं शमसुधासम्यक्त्वचिंतामणि–
श्रेयःस्वस्तरुमुख्यरत्ननिवहं गृह्णंत्वनायासतः ॥१३९॥

वर्षांतरिति ॥ हे भव्याः । व्याख्यानरत्नाकरात् व्याख्यान मेवरत्नाकरः समुद्रस्तस्मात् । शमः क्षमा स एव सुधारत्नं । सम्यक्त्व मेव चिंतामणिरत्नं । श्रेयो मोक्षस्तदेव स्वस्तरुः कल्पद्रुस्तन्मुख्य रत्ननिवहं तत्प्रभृतिरत्नसमूहं अनायासतो मथनादिप्रयासं वि-नैव गृह्णंतु अंगीकुर्वंतु भवंत इति शेषः । किं रूपं रत्नसमूहं । मा-दृग्वाग्लहरीस्फुटं मादृशो जनस्य वाग्वाणी सैव लहरी तया स्फुटं प्रकटीभूतं अन्यदपि समुद्रस्य रत्नं लहर्या स्फुटीभवति । किंरूपाद्व्याख्यानरत्नाकरात् । अभिनवात् नवीनात् । अस्याभिन वत्वमाह । किं रूपात् । वर्षांतः वर्षाकालमध्ये बहुवर्द्धिनः बहुवर्द्धन शीलात् । कैः नवरसैः शृंगारादिनवसंख्यैः रसैः पानीयैश्च । पुनः किं रूपात् । जाड्यं मौर्ख्यं क्रुधः कोपस्तावेवौर्वं वडवानलं छिनत्तीति जाड्यक्रुधौर्वच्छित्तस्मात् । पुनः किं रूपात् । शश्व-न्निरंतरं श्रीजिनः श्रीवीतरागः संनिधिः समीपो यस्य स तस्मात् । अन्यः समुद्रः वर्षाकाले जलैर्न वर्द्धते वडवानलं च छिनत्ति प्रत्युत वडवानलेन क्षीयते । सदा श्री जिनौ लक्ष्मीनारायणौ समुद्रे न भवतः किंतु वर्षास्वेव श्री जिनौ समुद्रे तिष्टतः अयं तु सर्वदेव । अतोऽभिनवत्वं वर्षाव्याख्यानं समुद्रस्य ॥

हे भव्यजनो ! वर्षाकालने विषे शृंगारादि नव रसोथी बहु वृद्धि पामता, मूर्खाइ अने क्रोध रूप वडवानलने छेदन करता तेमज जेनी पासे निरंतर श्री जिनराज निवास करे छे एवा नवीन व्याख्यान रूप समुद्रथी म्हारा सरखा पुरुषोनी वाणीवडे प्रगट थयेलां ( उपशमरूप अमृत, समकित रूप चिंतामणि अने मोक्षरूप कल्पवृक्ष विगेरे ) रत्नना समूहोने तमे मथन करवाना प्रयास विनाज ग्रहण करो. आ काव्यने विषे समुद्रने अभिनव विशेषण आप्युं छे; तेनुं कारण ए के, जे बीजो समुद्र छे ते वर्षा ऋतुमां बहु वृद्धि पामतो नथी अने वडवानलने छेदे छे तेमज पोते वडवानलथी शोषाय छे अने व्याख्यानरूप समुद्र वर्षा ऋतुमां वृद्धि पामे छे, तथा क्रोध अने मूर्खाइरूप वडवानलने मूलथी नाशे छे. वली आ बीजा समुद्र पासे लक्ष्मीनारायण रूप जिनेश्वर फक्त वर्षाऋतुमां रहे छे अने व्याख्यानरूप समुद्र पासे निरंतर वसे छे. एज हेतु छे. ॥ १३९ ॥

हवे बे काव्यथी पुण्यतिथीद्वार कहे छे.

( अनुष्टुप्वृत्तम्. )

साष्टमी व्यभिचाराय, श्रेयःकर्मणि किं यया ॥
तुल्यः पक्षद्वयेऽपींदुर्धृतः पक्षांतरस्थया ॥ १४० ॥

सेति। सा अष्टमी तिथी श्रेयःकर्मणि पुण्यकर्तव्ये किं व्यभिचाराय विनाशहेतवे स्यात् अपि तु मोक्षकार्यायैव भवति । सा का। यया अष्टम्या। पक्षद्वयेऽपि इंदुश्चंद्रस्तुल्य धृतः । किं भूतया अष्टम्या। पक्षांतरस्थया पक्षयोरंतरं पक्षांतरं तस्मिन् तिष्ठतीति तया। पक्षद्वयमध्यवर्त्तमानया ॥ १४० ॥

शुक्ल अने कृष्ण एवा बे पक्षना मध्य भागने विषे रहेली एवी जे आठमे चंद्रने सरखो रीते धारण करयो छे ते आठम शुं पुण्यनां कार्यनो नाश करवानुं कारण थाय छे? अर्थात् नथी थती.

एकैकापि हि पुण्याय, भूतेष्टापि तदंतिके ॥
योगे किं त्वब्धिवेलायां, गंगायमुनयोरिव ॥१४१॥

एकैकेति । भूतेष्टा चतुर्दशी हि निश्चितं एकैकापि पुण्याय स्यात् । किं तु तदंतिकेऽपि पूर्णिमामावास्येऽपि पुण्याय भवतः । एतदेव दृष्टांतेन दृढयन्नाह । गंगायमुनयोर्योगे अब्धिवेलायामिव । यथा गंगायमुनयोर्योगे समुद्रस्य वेलायां तीर्थत्वं भवति तथा।१४१।

गंगा अने जमुना ए बे नदीयोज तीर्थ छे एटलुंज नहि पण ते बे नदीयोना योगथी जेम समुद्रनी वेला तीर्थपणुं पामे छे तेम फक्त एक चौदशज पुण्यने अर्थे नथी, परंतु तेनी पासे रहेली पूनम अने अमास ते पण पुण्यने अर्थेज छे॥ १४१

हवे पद्य काव्यथी रक्षाद्वार कहे छे.

( स्रग्धरावृत्तम. )

अर्हच्चिंतामणित्वं कनककुसुमतां पंच यद्भूषणानि,
यस्यां सत्कंकणत्वं दधति च सततं पंच यल्लक्षणानि॥
धर्मः सिद्धार्थसार्थः सगुरुपदरजो दोरकस्तद्गुणाली,
धार्या सम्यक्त्वरक्षा कुगतिभयभिदे सद्गतिश्रेयसे च।

अर्हच्छ्रितेति । हे भव्याः । सम्यक्त्वरक्षा धार्या धारणीया कुतः। कुगतिरेव भयं तस्य भिदे विनाशाय।पुनः किमर्थ । सद्गतिरेव श्रेयो मंगलं तस्मै । यस्यां सम्यक्त्वरक्षायां अर्हः श्रीतीर्थंकरो देवः चिंतामणित्वं दधाति धारयति । पंच पंचसंख्यानि यद्भूषणानि यस्य सम्यक्त्वस्य भूषणानि । यस्यां सम्यक्त्वरक्षायां कनककुसुमतां सुवर्णपुष्पत्वं दधाति धारयति । च पंच पंचसंख्यानि यल्लक्षणानि यस्य सम्यक्त्वस्य चिन्हानि यस्यां सम्यक्त्वरक्षायां सत्कंकणत्वं दधातिधारयति । धर्मः सिद्धार्थसार्थः सर्षपसमूहः । तद्गुणाली सम्यक्त्वगुणावली सगुरुपदरजो दोरकः गुरुपदरजसा सहितः सगुरुपदरजो दोरको दवरको यस्यां सम्यक्त्वरक्षायां समभूदिति ॥१४२॥

हे भव्यलोको! जेमां अरिहंत प्रभु चिंतामणि रत्नपणाने, पांच आभूषणो सुवर्णनां पुष्पपणाने अने पांच लक्षणो उत्तम कंकणपणाने पामेलां छे. वली धर्मरूप सर्षवनो ढगलो, जेना गुणोना समूहरूप उत्तमगुरुना चरणनी रज सहित दोरो बनेलो छे, ते सम्यक्त्वनी रक्षा तमे कुगतिने दुर करवा माटे तथा सद्गति रूप कल्याणने माटे धारण करो. ॥१४२॥

हवे बे काव्यथी पर्युषणद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

कल्पाख्यानकपंचदिव्यनिहितः स्नात्राभिषेकोत्सवो,
भव्यैः पर्युषणामहःक्षितिपतिर्मिथ्यात्वकोपादिकम् ॥
कृत्वा पंच कुलं जनेऽतिविषमं भव्यं नवं स्थापयन्...

सम्यक्त्वं शममार्दवार्जवनिरीहत्वं शिवायास्तु वः॥१४३

कल्पेति । पर्युषणामहः पर्युषणापर्वोत्सवस्तदेव क्षितिपतिः नृपो वो युष्माकं शिवाय मंगलाय मोक्षाय वास्तु भवतु। किं कुर्वन्। जने लोकेऽतिविषमं दुष्टं मिथ्यात्वकोपादिकं आदिशब्दात् मानमायालोभरूपं पंचकुलं क्षिप्त्वा निःकास्य नवं नवीनं भव्यं प्रधानं पंचकुलं स्थापयन् स्थापनां कुर्वन्। किं तत् भव्यं पंचकुलं। १ सम्यक्त्वं, २ शमः क्षमा, ३ मार्दवं मृदुत्वं, ४ आर्जवं सरलत्वं, ५ निरीहत्वं निर्लोभत्वं.। किं रूपः क्षितिपतिः। कल्पाख्यानकैः कल्पसिद्धांतव्याख्यानैरेव पंचदिव्यैर्हस्त्यादिभिर्निहितः राज्ये स्थापितः। पुनः किंरूपः। भव्यैर्भविकलोकैः कृतः कृतोऽभिषेकोत्सवः पट्टाभिषेको यस्य स तथा ॥ १४३ ॥

हे भव्यजनो! कल्पसूत्रना व्याख्यानरूप पंचदिव्य-हस्ति विगेरेथी राज्य उपर स्थापन करेलो अने भविकजनोए करयो छे पट्टाभिषेक जेने एवो पर्युषणपर्वोत्सव रूप राजा, लोकने विषे अति विषम एवा मिथ्यात्व, क्रोध, मान, माया अने लोभरूप पंचकुलने दूर करी सम्यक्त्व, क्षमा, कोमलपणुं, सरलपणुं, अने निर्लोभीपणुं ए रूप उत्तम नवीन पंचकुलनुं स्थापन करतो छतो तमारा कल्याणने अर्थे थाओ ॥ १४३ ॥

( स्रग्धरावृत्तम् )

चेतःस्थालं विशालं कलमकणगणः श्रावकाणां गुणाली,
शम्यक्त्वं सद्दुकूलत्रितयमनुपमं नालिकेरं विवेकः॥

जैनाज्ञा मूभि दूर्वा मलयजघुसृणे भावलोकानुरागौ,
सत्कीर्त्तिः पुण्यवर्द्धापनमिति भवतादांतरद्विड्जये वः॥

चेतसिति । इति ईदृशं । पुण्यमेव वर्द्धापनं वो युष्माकं आंतरद्विड्जये आभ्यंतरवैरिजयहेतौ भवतात् भवतु । इतीति किं । चेत एव विशालं विस्तीर्णं स्थालं भाजनं । श्रावकाणां श्राद्धानां गुणाली एकविंशति गुणश्रेणिरेव कलमकणगणः शालिकण समूहः । सम्यक्त्वमेव सदुकूलत्रितयं श्रेष्ठपट्टकुलत्रयं । विवेकः धर्माधर्मविवेचनं स एव अनुपमं निःसमानं नालिकेरं । जैनाज्ञा जैनशासन मेव मूध्नि मस्तके दुर्वा । भावलोकानुरागौ मलयजघुसृणे भाव एव मलयजं चंदनं लोकानुराग एव घुसृणं कुंकुमं । ततः सत्कीर्तिरेव भवति । ईदृशं पर्युषणपर्वपुण्यमेव वर्द्धापनं जयायास्तु ॥

जेमां चित्तरूप म्होटुं पात्र, श्रावकोना गुण समूहरूप चोखानो समूह, सम्यक्त्वरूप त्रण रेशमी वस्त्र, धर्माधर्मना विवेकरूप उत्तम नालीयेर उपर जिनशासनरूप दूर्वा, भावरूप चंदन, लोकना अनुरागरूप कुंकुम शोभी रह्यां छे एवुं पर्युषणपर्वना पुण्यरूप वर्द्धापन के जेनाथी उत्तम कीर्ति थाय छे ते तमारा अंतरना शत्रुने जीतनारुं थाओ ॥ १४४ ॥

हवे नव काव्यथी अष्टाहिकाद्वार कहे छे.

( शार्दूलविक्रीडितवृत्तम् )

सौख्यं शाश्वतमेक एव हि जिनः कुर्यात्तु शेषैः सुरैः

दक्कर्णद्वितीयेन रूपगुणभृच्चेहापि तोषं परं,
घंटाचामरचेष्टितेन विवृणोत्यष्टाहिकैकोत्तरा ॥१४६॥

रागद्वेषेति। एकस्या उत्तरा अग्रेतना एकोत्तरा द्वितीयाष्टाहिका घंटाचामरचेष्टितेन विलसितेन एवं विवृणोति ईदृशं प्रकाशयति। किं विवृणोतीत्याह। रागद्वेषौ जयतीति रागद्वेषजित् तस्य वीतरागस्यार्हतो जिनराजस्यांघ्रियुगलं पादद्वयं पाणिद्वयेन हस्तयुग्मेन अर्चयन् पूजयन् सन् साधुश्रावकधर्मं भजतीति साधुश्रावकधर्मभाक् जनः परभवे परलोके स्वर्गापवर्गौ भजेत् देवलोकमोक्षौ आश्रयति। च पुनः दृग्द्वितीयेन लोचनयुगलेन रूपभृत् जिनरूपं पश्यन् सन् च पुनः कर्णद्वितीयेन गुणभृत् गुणाकर्णनसावधानः पुरुषः इहापि इहलोकेऽपि परं उत्कृष्टं तोषं संतोषं हर्षं भजेदिति पूर्वमेव क्रियापदं। घंटाद्वयी चामरद्वयी च स्यात्तन्निपादेवं ज्ञापयतीति ॥ १४६ ॥

बीजी अट्ठाइ घंटा अने चामरना चेष्टितथी एम प्रगट करे छे के, रागद्वेषरहित एवा जिनराजना बे चरणकमलने बे हाथथी पूजन करनारो माणस, साधु के श्रावकना धर्मने सेवनारो थइ परभवे स्वर्ग अने मोक्षने पामे छे. वळी बे नेत्रथी श्री जिनेश्वरना स्वरूपने निरखनारो अने बे कानथी जिनराजना गुणोने सांभळनारो ते माणस आ लोकने विषे पण उत्कृष्ट एवा संतोषने पामे छे. ॥ १४६ ॥

त्रैलोक्यं त्रिपदीतनुस्त्रिपथगा प्रीणाति यस्यान्वहं,
कालेषु त्रिषु तं त्रिकालविदुरं देवं त्रिशुद्ध्या मह।

स्वच्छत्रत्रयसंपदे दिशति वो येनैष रत्नत्रयं,
त्रिःपुष्पांजलिसंज्ञया ज्ञपयतीत्यष्टाह्निका द्युत्तरा ॥

त्रैलोक्यमिति । द्युत्तरा तृतीयाष्टाह्निका त्रिः त्रिवारं पुष्पांज लिसंज्ञया कृत्वा इत्थं ज्ञपयति । इतीति किं । यस्य देवस्य त्रयाणां पादानां समाहारस्त्रिपदी ( उपन्नेवा विगमेवा धुवेवा ) इति लक्षणा तनुः शरीरं यस्या सा त्रिपदीतनुः त्रिपदीशरीररूपा त्रिपथगा गंगानदी अन्वहमहर्निशं त्रैलोक्यं स्वर्गमृत्युपाताललक्षणं प्रीणाति पवित्रयति संतोषयति वा। तं त्रिकालविदुरं अतीतानागतवर्त्तमानकालत्रयवर्त्तमानवस्तुज्ञातारं देवं त्रिषु कालेषु प्रभात मध्यान्हसंध्यालक्षणेषु विशुद्ध्या मनोवाकायनैर्मल्येन स्वच्छत्रत्रयसंपदे निजच्छत्राधिकलक्ष्मीनिमीत्ताय मह पूजय । हे भव्य इति शेषः । येन कारणेन एषो वीतरागो देवः स्वच्छत्रत्रयसंपदे स्वकीयच्छत्रत्रयलक्ष्मीनिमीताय रत्नत्रयं ज्ञानदर्शनचारित्ररूपं दिशति ददाति । इति त्रिः कुसुमांजलिसंज्ञामिषात् कथयति ॥ १४७ ॥

त्रीजी अट्ठाइ, त्रण पुष्पांजलिनी संज्ञाथी एम समजावे छे के, हे भव्यजन ! जेनी 'उपन्नेवा, विगमेवा, धुवेवा' रूप त्रणपदना शरीरवाळी गंगा त्रणलोकने निरंतर पवित्र करे छे एवा त्रिकालना जाण श्री अरिहंत देवने प्रभात, मध्यान्ह अने सायंकालने विषे मन, वचन अने कायानी शुद्धिये करीने पूजन कर के, जेथी फरीने ते देव, पोताना छत्रत्रयरूप संपत्तिने अर्थे रत्नत्रय (ज्ञान, दर्शन अने चारित्र आपे छे ॥ १४७ ॥

व्याख्यासद्म चतुर्विधामरकृतं प्राप्यावदद्यश्चतु-
र्मूर्तिस्तीर्थपति श्चतुर्गतिहितं धर्मं चतुर्द्धा बुधाः ॥
तं कुर्वंतु चतुःकषायरहितास्तूर्ये पुमर्थे रताः
ब्रूते संघकृतस्तुतिप्रतिरवैस्तूर्येयमष्टाहिका ॥ १४८ ॥

व्याख्येति । इयं तूर्या चतुर्थी अष्टाहिका चतुर्विधसंघेन कृता या स्तुतिः स्तवनं तस्याः प्रतिरवैः प्रतिशब्दैः कृत्वा एवं ब्रूते कथयति । यः चतस्रो मूर्तयः शरीराणि यस्य स चतुर्मूर्तिस्तीर्थपतिस्तीर्थनाथः चतुर्विधैर्भुवनपतिव्यंतरेंद्रज्योतिष्कवैमानिकलक्षणैरमरैर्देवैः कृतं चतुर्विधामरकृतं व्याख्यासद्म समवसरणं प्राप्य चतुर्गतिहितं चतुर्गतिनां देवमनुष्यतिर्यग्नारकसंबंधिनीनां हितं सुखकारिणं धर्मं चतुर्द्धा चतुःप्रकारं दानशीलतपोभावलक्षणं अवदत् वदतिस्म । हे बुधाः पंडिताः ! चतुःकषायरहिताः क्रोध मानमायालोभरूपैश्चतुर्भिः कषायैर्वर्जिताः तूर्ये चतुर्थे पुमर्थे पुरुपार्थे मोक्षरूपे रताः साभिलाषाश्च संतः तं जिनोक्तं धर्मं कुर्वंतु रचयंतु भवंत इति शेषः ॥ १४८ ॥

आ चोथी अट्टाइ, चारप्रकारना संघे करेली स्तुतिना पडछंदाथी एम कहे छे के, जे चार मूर्तिवाला श्री तीर्थंकर प्रभुए, भुवनपति, व्यंतर, ज्योतिष्क अने वैमानिक एम चार प्रकारना देवताओए रचेला समवसरण प्रत्ये विराजित थइ देव, मनुष्य, तिर्यंच अने नरक ए चारप्रकारनी गतिने सुखकारी एवा दान, शील, तप, भाव रूप जे चार प्रकारनो धर्म कह्यो छे ते धर्मने हे पंडि-

त लोको! तमे काम, क्रोध, माया अने लोभरूप चार कषायथी रहित थइने अने मोक्ष नामना पुरुषार्थने विषे प्रीतिवाला थइने आदरो.

किं पंचेंद्रियशर्म पंचविषयैर्मूढा मितं वांछतो-
दंचंत्यश्च सुभावनानि दधतां पंचव्रतान्युच्चकैः ॥
पंचज्ञानवतां यथा बहुसुखा वः स्याद्गतिः पंचमी,
स्पष्टं जल्पति पंचशब्दनिनदैरष्टाह्निका पंचमी ॥१४९॥

किमिति। पंचमी अष्टाहिका पंचशब्दनिनदैर्मृदंगादिवादित्रशब्दैः स्पष्टं प्रकटं एवं जल्पति। किं जल्पतीत्याह । हे मूढा मूर्खाः। पंचेंद्रियाणां स्पर्शरसघ्राणचक्षुःश्रोत्ररूपाणां शर्म सुखं पंचविषयैः शब्दरूपरसगंधस्पर्शैः कृत्वा किं वांछत अभिलषत यूयमिति शेषः। किं रूपं शर्म। मितं प्रमाणयुक्तं । उच्चकैरतिशयेन उदंचंत्यः स्फुरंत्यः सुष्टु प्रधाना भावना एषां तानि ईदृशानि पंचव्रतानि अहिंसासूनृतास्तेयाब्रह्माकिंचनरूपाणि दधतां धारयतां भवंत इति शेषः। यथा पंचज्ञानवतां मतिश्रुतावधिमनःपर्यव केवलरूपाणि पंचज्ञानानि विद्यंते येषां ते तथा तेषां वो युष्माकं बहुसुखा नित्यसौख्यदा पंचमी मोक्षरूपा गतिः स्यात् ॥ १४९ ॥

पांचमी अष्टाह वाजींत्रोना शब्दथी एम प्रकट कहे छे के, हे मूर्खजनो! तमे स्पर्श, रस, घ्राण, चक्षु अने श्रोत्र इंद्रियना परिणामवाला अल्प सुखने शामाटे इच्छो छो? अतिशये स्फुरायमान थयो उत्तम भावनावाला पांच महाव्रतो धारण करो के, जेथी मति, श्रुत अवधि, मनःपर्यव अने केवल ज्ञानवंत थयेला

तमने नित्यसुख आपनारी मोक्ष रूप पांचमी गती थाय ॥ १४९ ॥

जित्वा पड्विकृतिस्पृहां पडपि तान् मुक्त्वा रसान् शक्तितः।
पड्जीवावनतस्तपः कुरुत पड्भेदं वहि श्चावहिः ॥
द्विड्पड्वर्गजयो मतः पडृतुजा पूजा च चेन्मानसे,
भट्टोन्नादितपट्पदध्वनिरुवाचाष्टाहिका पट्टिका। १५०।

जित्वेति। पष्टिका पष्ठा अष्टाहिका भट्टोन्नादितो भट्टैरुल्लापितो पट्पदानां ध्वनिर्यत्र सा एवं उवाच ॥ किमित्याह ॥ मानसे चित्ते द्विड्पड्वर्गस्य शत्रुपड्वर्गस्य जयो मतोऽभीष्टश्चेत् । च पुनः पडृतुजा पड्संख्यकऋतुत्पन्ना पूजा मानसे मताऽस्ति। यत्तदोरेक संबंधात्तर्हि पड्जीवानां पृथ्वीजलाग्निवायुवनस्पतित्रससूतानां अवनतो रक्षातः तपः कुरुत यूयमितिशेषः। किंरूपं तपः । वहिर्वाह्यं पड्भेदं पड्प्रकारं अथाहिश्च पड्भेदं पड्संख्यं। किं कृत्वा तपः कुरुतेत्याह। पड्विकृतिमूहां पड्विकृतयः तैलघृतगुडदुग्धदधिपक्वान्नानि चेति तासां स्पृहां वांछां लौल्यं जित्वा निराकृत्य। पुनः तान् मांसद्धान् मधुरातिक्तकटुकषायाम्ललवणभेदात् पड्विधान् रसान् शक्तितो मनोदार्ढ्यतो मुक्त्वा त्यक्त्वा ॥ १५० ॥

सुभटोए वगाडेला पट्पदना शब्द रूप छठी अट्टाइ एम कहे छे के, हे भव्यजनो ! जो तमारा चित्तने विषे छ शत्रुओथी विजय करवो मान्य होय अने छ ऋतुमां उत्पन्न थयेली पूजा मान्य होय तो तमे तेल, घी, गोळ, दुध, दहीं अने पक्वान्न रूप छ विकृतिनी

स्पृहा त्यजी दइ तथा मीठा, तीखा, कडवा, कहेला, खाटा अने खारा एम छ प्रकारना रसने पण मनना दृढपणाथी त्यजी दइ पृथ्वी, जल, अग्नि, वायु, वनस्पति अने त्रस जीवोने रक्षण करवाथी छ अंतरना अने छ बाह्यना एम बार भेदवालुं तप करो॥१५०॥

सप्तापि व्यसनानि सप्तनरकद्वाराण्यहो सप्तभी-
हेतूनि त्यजताशु पुण्यनृपतेः क्षेत्राणि राज्यांगवत् ।
सप्ताप्याप्नुत सप्तभूमिकगृहे तत्वे वसंतु स्वयं,
सत्सप्तस्वरगीतकैतवमुवाचाष्टाहिका सप्तमी । १५१ ।

सप्तापीति । सप्तमी अष्टाहिका सत्सप्तस्वरस्य प्रधानसप्तसंख्यस्वरसहितस्य गीतस्य कैतवं कपटं यथा स्यात्तयोवाचावादीत् । षरजऋषभगांधारमध्यमाः पंचमस्तथा ॥ धैवतो निषधः सप्तंत्री कोठाद्भवाः स्वराः ॥ १ ॥ इत्येते सप्तस्वराः किमुवाचेत्याह ॥ हे षा! अहो इत्याश्चर्ये । सप्तापि व्यसनानि त्यजत मुंचत । द्यूतमद्यमांसवेश्यापापर्द्धिचोरीपरदारसेवालक्षणानि सप्तव्यसनानि । किं रूपाणि सप्तव्यसनानि। सप्तनरकाणां रत्नप्रभावालुकप्रभाशर्करप्रभापंकप्रभाधूमप्रभातमःप्रभातमस्तमःप्रभानाम्नां द्वाराणि । यथा द्वारैः कृत्वा गृहं प्रविशंति लोकास्तथा सप्तव्यसनैः कृत्वा मूढा नरकं प्रविशंति।पुनः किं रूपाणि ।सप्तमीहेतूनि सप्तभयकारणानि च । आशु शीघ्रं पुण्यनृपतेः धर्मभूपस्य सप्तापि जिनभुवनबिंबपुस्तकसाधुसाध्वीश्राद्धश्राद्धीनामानि क्षेत्राणि राज्यांगवत्स्वा-

प्लुत व्याप्लुत। यूयमिति शेषः। सप्तभूमिकगृहे सप्तभूमिकगृहसमाने तत्वे च स्वयमात्मना वसंतु वासं कुर्वंतु भवंत इति शेषः ॥१५१॥

सातमी थहाइ उत्तम एवा सात स्वरवाला गीतना कपटने जेम होय तेम कहे छे के, हे भव्यजनो! तमे, सात नरकना अने सात भयना कारण एवा सात व्यसनने त्यजी घो अने पुण्य रूप भूपतिना जिनभुवनादि सात क्षेत्रोने गज्यांगनी पेठे शोध्र मेलवो. तथा सात मालना महेल समान सात तत्वने विषे निवास करो

मुक्त्वाष्टौ मदकारणान्यविरतं सत्प्रातिहार्याष्टकं,
दैवं पूजय पूजयाष्टविधया येनैष तुष्टः पदम् ॥
तद्वो यच्छति यत्र नास्ति पतनं दुष्टाष्टकर्मापदा,
चष्टे मांगलिकाष्टदीपकमिषादष्टाह्निकाप्यष्टमी।१५२।

मुक्त्वेति। अष्टमी अष्टाह्निकापि मांगलिकाष्टदीपकमिषादेवमाचष्टे कथयति! हे भव्य! जातिकुलरूपबलश्रुततपोलाभश्रीरूपाणि अष्टौ मदकारणानि मुक्त्वा अविरतं निरंतरं अष्टविधया पुष्पाक्षतांबुफलचंदनधूपदीपनैवेद्यभेदादष्टप्रकारया पूजया देवंपूजय समर्चय। किं रूपं देवं। प्रभातिहार्याष्टकं अष्टप्रातिहार्यसहितं। पूजनफलमाह। येन कारणेन एष देवो तुष्टः प्रसन्नः सन् वो युष्मभ्य तत्पदं स्थानकं यच्छति। यत्र पदे दुष्टाष्टकर्मापदा कृत्वा पतनं भ्रंशनं संसारागमनं नास्ति ॥ १५२ ॥

आठमी अट्ठाइ अष्टमंगलिके दीवाथी एम कहे छे के, हे भव्यजनो! तेम जाति, कुल, रूप, बल, श्रुत, तप, लाभ, संपत्ति रूप मदना आठ कारणोने त्यजी दइ उत्तम प्रकारनी फुल, चोखा, ज-

ल, फल, चंदन, दीवो, नैवेद्य ए विगेरेथी आठ प्रकारी पूजावे करीने ते देवनी पूजा करो के, जे देव ते पूजाथी प्रसन्न थइ त-मने तेवुं पद आपदो के, जे पदथी दुष्ट आठ कर्मरूप, आपत्तिये करीने पण संसारमां पडवापणुं नहि थाय. ॥ १५२ ॥

नैतेऽप्येत इवोपमानविगमादष्टाह्निका वासरा,
एकैकोचकला इतींदुसदृशाः किंचित्त्वभूवन्विमे ॥
श्राद्धस्वांतपयोधिनेत्रकुमुदश्रेणीचकोरेक्षणो-
ल्लासाय स्मरतापमोहतिमिरोच्छित्यै यतोऽहर्निशम् ॥

नैत इति । एतेऽपि पूर्वोक्ता अष्टाह्निका वासरा एते इव अष्टाह्निका दिना इव न विद्यंते । कुतः । उपमानविगमात् अन्योन्यौपमानराहित्यात् । इमे अष्टाह्निका वासरा एकस्मादेकस्मादुच्चाऽधिका कला महिमा येषु ते एकैकोचकलाः तथा एवं विधाः संति । इति हेतोरिमा अष्टाह्निका वासराः किंचित् स्तोकं इंदुसदृशाश्चंद्रसमाना अभूवन् भवंतिस्म । चंद्रा अपि एकस्मादेकस्मादधिककलाः स्युः । यतो यस्मात् कारणात् अहर्निशं निरंतरं श्राद्धस्वांतं श्रावकचित्तमेव पयोधिः समुद्रः तस्योल्लासाय इमे स्युः । पुनः श्राद्धनेत्राण्येव कुमुदश्रेणी कुवलयावली तस्या उल्लासाय स्युः । पुनः श्राद्ध एव चकोरास्तेषामिक्षणानि नेत्राणि तासामप्युल्लासाय स्युः । पुनः स्मरस्य तापः स्मरतापः मोह एव तिमिरं मोहतिमिरं स्मरतापश्च मोहतिमिरं च स्मरतापमोहतिमिरे तयोरुच्छित्यै विनाशाय स्युः कंदर्पतापविनाशाय मोहांधकारविनाशाय च स्युः ॥ १५३ ॥

ए पूर्वे कहेला अठ्ठाइना दिवसो उपमारहित होवाथी ते पोते न होय तेवा देखाय छे. वली तेओ एक एकथी अधिक महिमावाला होवाने लीधे कांइक चंद्रसमान छे. ते कारणमाटे ते दिवसो श्रावकनां चित्तरूप समुद्रना उल्लासने माटे, श्रावकनां नेत्र रूप कुमुदनी पंक्तिना हर्षने माटे अने श्रावक रूप चकोरनां नेत्रना आनंदने माटे हो. वली कामदेवना तापना नाशने अर्थे अने मोह रूप अंधकारना क्षयने माटे पण हो. ॥ १५३ ॥

हवे ते काव्यथी दीपोत्सवद्वार कहे छे.

( वसंततिलकावृत्तम्. )

कल्याणकं भगवतां धुरि यत्र चाभूत्,
श्रेष्ठः स एव दिवसः पुनरागतोऽद्यः ॥
श्रीवीरमोक्षदिवसोद्भवदीपपर्व,
यद्वत्ततः सुकृतिनोऽत्र महोऽनुवर्षम् ॥ १५४ ॥

कल्याणकमिति । यत्र यस्मिन् दिवसे भगवतां तीर्थंकराणां धुरि मुख्यं कल्याणकं अभूत् । स एव श्रेष्टः दिवसोऽद्य पुनरागतः प्राप्तः । श्रीवीरमोक्षदिवसोद्भवदीपपर्व यद्वत् श्रीवीरप्रभुनिर्वाणदिवसोद्भुतदीपोत्सवपर्व यथा । ततः तस्मात्कारणात् सुकृतिनः पुण्यवंतः पुरुषा अनुवर्षं वर्षं वर्षं अनु इति अनुवर्षं प्रतिवर्षं अत्र दिवसे महः उत्सवं कुर्वंतु इति शेषः ॥ १५४ ॥

जे दिवसे श्री वीरप्रभुना निर्वाण कल्याणथी उत्पन्न थयेला

दीवालीना पर्वनी पेठे था तीर्थंकरोनुं धुरंधर कल्याणक छे. ते अति उत्तम पर्वो दिवस वली आजे प्राप्त थयो; माटे पुण्यवंत माणसोए दरेक वर्षमां आ कल्याणकना दिवसने विषे उत्सव करवो.

( शार्दूलविक्रीडितवृत्तम्. )

सद्ध्यानोज्वलदीपकः प्रविलसत्स्वाध्यायमेरात्रिकः,
कल्पाचारसुभोजनः सुगुणवाक्तांबुलशोभाशुभः ॥
अश्रीनिर्गमलक्ष्म्युपागमजयज्येष्टावनामोत्तरः,
शीलालंकृतिभाग् मुदे भवतु वोऽर्हद्धर्मदीपोत्सवः१५५

सद्ध्यानेति । अर्हद्धर्म एव दीपोत्सवो दीपालिकापर्व वो युष्माकं मुदे हर्षाय भवतु । किं भूतो दीपोत्सवः । सद्ध्यानानि प्रधानध्यानान्येव उज्वला दीपका यत्र स तथा । पुनः किंरूपः । प्रविलसंतो देदीप्यमानाः स्वाध्याया एव मेरात्रिकाणि यत्र स तथा पुनः किं रूपः । कल्पाचारस्तस्य सुभोजनं प्रधानभोजनं यत्र स । पुनः किं रूपः। सुगुणानां प्रधानगुणानां वागेव वाण्येव तांबुलशोभा तया शुभो मनोहरः । पुनः किंरूपः । अश्रीनिर्गमनेन अलक्ष्मीनिर्गच्छनेन लक्ष्म्युपागमेन लक्ष्मीसमागमनेन जयेन विजयेन ज्येष्टावनामेन गुर्वादिप्रणामेन च उत्तरः उत्कृष्टः। पुनः किं रूपः । शीलमेव अलंकृतीस्तां भजतीति स तथा ॥ १५५ ॥

- 'उत्तम ध्यान रूप जाज्वल्यमान दीवावालो, देदीप्यमान स्वाध्याय रूप ... ..., कल्पाचार रूप उत्तम भोजन ...

पवो, उत्तम गुणोनी वाणी रूप तांबुलनी शोभाथी मनोहर, लक्ष्मीना जयाथी, लक्ष्मीना आववाथी, जयथी अने गुर्वादि क्रमोने प्रणाम करवाथी उत्कृष्ट तथा शील रूप अलंकारने धारण करनारो एवो जे दीवालीनो उत्सव ते तमारा हर्षने अर्थे थाओ. ॥ १५५ ॥

हवे थे काव्यथी व्याख्यासमर्थनद्वार कहे छे.

व्याख्यानं श्रुतदुग्धसारमधिकं स्निग्धं निपीयादरा-
न्मात्याक्षू रसिता मुधा शमदधिश्रेयोघृतोच्छ्रायकृत्
अस्मात्तस्य समर्थनायतदिदं कालेन भव्यैः पुनः,
सम्यक्त्वांगविवृद्धिकृद्बहुतृषा पेयं तमस्तापभित्॥१५

व्याख्यानमिति । हे लोका । श्रुतं सिद्धांत एव दुग्धं क्षीरं तद्वत्सारं प्रधानं । अधिकं स्निग्धं स्नेहदं च व्याख्यानं आदरात् बहुमानात् निपीय पीत्वा रसितास्तृप्ताः संतो मुधा निःफलं तदेव व्याख्यानदुग्धं मा साधुः मा मुंचेयुः । किं रूपं व्याख्यानदुग्धं । शम एव दधि श्रेयो मोक्षो मंगलं वा तदेव घृतं तयोरुच्छ्रायं वृद्धिं करोतीति तथा । व्याख्यानं शमश्रेयसोरुच्छ्रायकृत् । दुग्धं तु दधिघृतयोर्वृद्धिकृत् । अतो दुग्धतुल्यं व्याख्यानं । अस्मात् कारणात् तस्य व्याख्यानदुग्धस्याद्याद्युनैव समर्थना याञ्चा विधियते । तदिदं व्याख्यानदुग्धं कालेन प्रस्तावेन भव्यैः पुरुषैर्भवद्भिर्बहुतृषा बहुलोभेन पुनः पेयं श्राव्यं । किंगुणं व्याख्यानं । सम्यक्त्वांगविवृद्धिकृत् सम्यक्त्वमेवांगं शरीरं तस्य वृद्धिं करोतीति तथा । पुनः किंगुणं । तमोऽज्ञानं तदेव तापः तं भिनत्तीति । व्याख्यानं सम्य-

त्वं वर्द्धयति अज्ञानं चापाकरोति । दुग्धमपि शरीरं वर्द्धयति तापं च निराकरोतीति भाव्यं ॥ १५६ ॥

हे भव्यजनो ! उपशम रूप दहीं अने मोक्ष रूप घीनी वृद्धि करनारुं एवुं जे सिद्धांत रूप दुध तेना समान सारभूत एवा व्याख्यानने घणु आदरथी सांभलीने तृप्त थया छता तेने (व्याख्यानरूप दुधने) त्यजी देशो नहि. कारण ते व्याख्यान रूप दुधनी हमणां पण याचना कराय छे अने तेथीज सम्यक्त्व रूप शरीरनी वृद्धि करनारुं तथा अज्ञान रूप तापने भेदी नाखनारुं ते व्याख्यान रूप दुध अवसरे तमारा सरखा भव्यजनोए घणु तृषाथी पान करवा योग्य छे. ॥ १५६ ॥

सिद्धांतांबुधिसंभवेऽद्य विरते व्याख्याघने सद्रसै-
र्दृष्टांतैः सकषायतापजनहृद्भूमिं शमित्वाभितः ॥
सप्तक्षेत्रधरासु वित्तवपनं कुर्वंतु वः पुण्यतो-
निःसप्तव्यसनेतिभीति विविधं शस्यं यथा स्याज्जनाः॥

सिद्धांतेति । हे सज्जनाः । सप्तक्षेत्रधरासु सप्तक्षेत्राणि जिनभुवनादीनि तान्येव धराः पृथिव्यस्तासु वित्तवपनं कुर्वंतु । किं सति वित्तवपनं कुर्वंतु । व्याख्याघने व्याख्यानमेघेऽद्य विरते सति । किं कृत्वा । सद्रसैः प्रधानरसैर्दृष्टांतैः कृत्वा । कषायतापेन सह वर्त्तते ये ते तथा ईदृशा जनास्तेषां हृत् हृदयं तदेव भूमिं पृथ्वीमभितः शमित्वा सिक्त्वा । किं रूपे व्याख्याघने । सिद्धांतांबुधिसंभवे सिद्धांतसमुद्रोत्पन्ने । पुण्यतः पुण्यात् वो युष्माकं विविधं बहुविधं शस्यं धान्यं स्यात् । कीदृशं धान्यं । निर्गतासप्तव्यसनानां सप्तैव इतीनां

भीतिर्यत्र। अन्यस्मिनपि मेघे जलैर्भूमिं सिक्त्वा विरते सति लोकाः क्षेत्रेषु धान्यं वपंति तर्हि धान्यं अतिवृष्ट्यादिइतिसप्तकभयरहितं सत् विविधं स्यात् ॥ १५७ ॥

हे सज्जन पुरुषो! सिद्धांत रूप समुद्रथी उत्पन्न थयेलो व्याख्यान रूप मेघ, दृष्टांत रूप उत्तमजले करीने कषायना तापवाला जनोनां हृदय रूप पृथ्वीने सिंचन करीने विराम पामे छते तमे सातक्षेत्र रूप पृथ्वीने विषे वित्तनुं वावयुं करो के, जेथी पुण्यने लीधे सात व्यसन रूप सात इतीना भय रहित एवुं बहु प्रकारनुं धान्य तमने प्राप्त थाय. ॥ १५७ ॥

हवे एक काव्यथी कार्तिक चातुर्मासद्वार कहे छे.

व्याख्यानांबुधरोपदेशसलिलैः सुश्राद्धचेतः सरः-
पूर्त्तिः कीर्तिनदीततिर्मलरजश्छित्तिश्च यत्राभवत्॥
बालश्रावकभेककेकिपठनस्वाध्यायकोलाहलं,
सत्कृत्यान्नफलाय वो भवतु तद्वर्षाचतुर्मासकम् ॥१५८॥

व्याख्यानेति। यत्र वर्षाचतुर्मासके व्याख्यनमेव अंबुधरो मेघस्तस्योपदेशैरेव सलिलैर्जलैः कृत्वा सुश्रावकचेतस एव सरसः सरोवरस्य पूर्त्तिः पोषणमभवत्। यत्र च तैः कीर्तिरेव नदी तस्याः ततिः श्रेणिः प्रवाहोऽभवत्। मलरजश्छित्तिश्च पापरजःस्फेटनमभवत्। तद्वर्षाचतुर्मासकं कार्त्तिकचतुर्मासकं वो युष्माकं सत्कृत्यमेवान्नं धान्यं तस्य फलाय भवतु। अत्र तु प्रधानकरणीयं फलति। कार्त्तिके मासे तु धान्यं फलतीति। किं रूपं तच्चतुर्मासकं। बाल-

श्रावका एव भेका दर्दुराः केकिनो मयूरास्तेषां पठनं स्वाध्यायश्च तयोः कोलाहलो यत्र तत्तथा ॥ १५८ ॥

जे कार्तिक चोमासाने विषे व्याख्यान रूप मेघनां उपदेशरूप जलवडे सुश्रावकना चित्त रूप तलावो भरपूर थाय छे. कीर्तिरूप नदीनो प्रवाह वहे छे अने पाप रूप रजनो नाश थाय छे. ते बालश्रावक रूप देडका अने मोरना अभ्यासनो छे शब्द जेने विषे एवुं कार्तिक चोमासुं तमारा सत्कृत्य रूप धान्यनां फलने अर्थे थाओ.

हवे एक काव्यथी विहारप्रकार कहे छे.

( स्रग्धरावृत्तम. )

घस्रे शीतोष्णकाले प्रथमवयसि तत्कर्म कुर्वीत विद्वान्,
येनांते स्यात्सुखीतो वयमपि तदहोऽवेत्य कुर्मो विहारम्
नानार्हत्तीर्थयात्रा श्रुतधरनमनं संशयांतः श्रुताप्तः,
शुद्धान्नोपध्यवाप्तिः प्रवचनमहिमा मूढबोधाद्यतो यत्॥

घस्र इति । घस्रे दिवसे शीतोष्णकाले शीतकाले उष्णकाले च प्रथमवयसि यौवनावस्थायां तत्कर्म कार्यं विद्वान् पंडितः कुर्वीत विदधीत । येन कर्मणा कर्त्तव्येन अंते रात्रौ वर्षाकाले वृद्धावस्थायां च विद्वान् सुखी भवति । इतोऽस्मात् स्थानात् अहो इत्याश्चर्ये तत्कर्म अवेत्य ज्ञात्वा वयमपि विहारं कुर्मो विदध्महे । यद्यस्मात् कारणाद्यतो विहारकरणान्नानार्हत्तीर्थयात्रा भवति । श्रुतधरस्य सिद्धांताधिकस्य गुर्वादेर्जनस्य नमनं नमस्करणं भवति । अत एव

संशयांतः संदेहापोहः स्यात् । अत एव च श्रुनायः सिद्धांतलाभः शुद्धं निर्दोषं अन्नं आहारः उपधिरूपकरणं तयोरवाप्तिः प्राप्तिः स्यात् । मूढबोधात् मूर्खस्य प्रतिबोधात् प्रवचनमहिमा प्रवचनस्य जिनशासनस्य जिनसिद्धांतस्य वा महिमाऽतिशयः स्यात् । एते विहारकर्मतो जायंते यतो विहरामः ॥ १५९ ॥

विद्वान् माणसे दिवसे, शियालामां, उनालामां अने युवावस्थामां तेवुं कार्य करवुं जोइए के, जेथी रात्रीमां, वर्षाकालमां अने वृद्धावस्थामां सुखी थवाय. एज कारणथी अमे पण ते कार्यने जाणी विहार करीए छीए के, जेथी नाना प्रकारना अर्हतना तीर्थनी यात्रा, सिद्धांतना जाण एवा गुर्वादिने नमस्कार, शास्त्रना संशयनो नाश, शुद्ध एवा आहार अने उपधिनो लाभ तेमज मूर्खजनने प्रतिबोध करवाथी जिनशासननी उन्नति ए सघलुं थाय छे. आवां कारणथी अमे विहार करीए छीए. ॥ १५९ ॥

हवे एक काव्यथी कार्तिकपारणक कहे छे.

( शार्दूलविक्रीडितवृत्तम्. )

चातुर्मासिकमेकपारणदिनं नूनं फलं प्राप्नुयात्,
भर्तुर्वार्षिकमप्ययाप न कथं श्रेयांस एकाह्न्यपि ॥
स्थानस्थाननिखातकोटिविभवः कोटीश्वरः किं भवेत्,
कोटिमूल्यमहामणिं करतले किं खेलयन्नापरः॥१६०॥

चातुर्मासिकमिति । नूनं निश्चितं एकमेव पारणदिनं चतुर्मासेषु भवं चातुर्मासिकं तपःफलं प्राप्नुयात् लभते । अत्रार्थे जैन

दृष्टांतमाह । श्रेयांसः श्रेयांसकुमारः एकाह्नयपि एकस्मिन् दिवसेऽपि भर्तुः श्रीआदिनाथस्य वार्षिकं पारणकं कारयन्निति शेषः वार्षिकं वर्षोत्पन्नं तपःफलं कथं किं नावाप । अपि तु श्रेयांस एकदिनेऽपि वार्षिकमपिफलं प्रापैव । अमुमेवार्थं लोकदृष्टांते न दर्शयति ॥ स्थाने स्थाने निखातो भूमौ खनित्वा स्थापितः कोटिसंख्या विभवो द्रव्यं येन स तथा एवंविधः पुरुषः किं कोटीश्वरो भवेत् । अपरोऽन्यः करतले हस्तमध्ये कोटिमूल्यमहामणिं खेलयन् किं कोटीश्वरो न भवेत् अपि तु द्वावपि कोटीश्वरो भवतः ॥१६०॥

एक परिणाना दिवसमध्ये चोमासानुं फल प्राप्त थाय छे. जुओ के, श्रेयांसकुमारे एकज दिवसे श्री आदिनाथने पारणुं करावी शुं परंतु फल नथी मेलव्युं ? दृष्टांत कहे छे के, स्थाने स्थाने कोटीसंख्यावालुं द्रव्य भूमिमां डाटी राखनारो माणस शुं कोटीश्वर कहेवाय ? अने बीजो कोटीमूल्यना रत्नने हाथमां खेलावनारो शुं कोटीश्वर न कहेवाय. अर्थात् बन्ने कोटीश्वर कहेवाय छे. ॥ १६० ॥

हवे बे काव्यथी संघाचारप्रकार कहे छे.

तीर्थेशैर्व्रतधर्मपोषणपुरस्कारात्परामुन्नतिं,
नीतं यच्च ददाति भूतिमतुलां श्रीशालिभद्रादिवत् ॥
तन्निःसत्वतिरस्क्रियालघु कलौ दानं त्वयोल्लासितं,
कैः कैर्भद्र पुनःफलिष्यति फलैस्तत्वैर्जिनो वेत्ति तत् ॥

तीर्थेशैरिति । व्रतेषु आद्यं अनुकंपादानं चतुर्विधधर्मेषु चाद्यं वर्तते । अतःकारणात् यद्दानं तीर्थेशैः तीर्थकरैर्व्रतधर्मयोः पोषणे

पुरस्कारादग्रेकरणात्परां उत्कृष्टां उन्नतिं नीतं । यच्च दानं श्री शालिभद्रादिवत् श्रीशालिभद्रादिपुरुषेभ्य इव अतुलां निःसमानां लक्ष्मीं ददाति । तत् दानं कलौ कलिकालमध्ये निःसत्वतिरस्क्रिया निष्कारणलोकनिराकरणं तया लघु सद्दानं त्वया उल्लासितं प्रकटितं । हे भद्र पुण्यहृदय! ते तव तत् दानं कैः कैः फलैः पुनः फलिष्यति । यत्तदोरेक संबंधात् । यदि वेत्ति तर्हि जिन एव तत् दानं तत्त्वैर्वेत्ति ॥ १६१ ॥

मतने विषे अने चार प्रकारना धर्मने विषे अनुकंपादान मुख्य छे. ए कारणथी ए अनुकंपादानने तीर्थकरोए मत धर्मना पोषणने विषे अग्रेसर करवाथी म्होटी उन्नतिने पमाडयुं छे. ते दान शालीभद्रने आपी तेम बीजाओने पण बहु लक्ष्मी आपनारुं थाय छे. हे पुण्यवंत जीव! तें तेवा दानने आ कलियुगने विषे दरिद्री लोकोने काढी मूकवाथी लघुपणा रूप प्रकट कर्युं, तो ते दान तने केवां केवां फलोथी फलाभूत थशे. ते जो जाणी शके तो तत्वथी जिनेश्वरज जाणी शके तेम छे, पण बीजाथी जाणी शकाय तेवुं नथी ॥ १६१ ॥

मान्यस्तीर्थपतेः परिग्रह इव क्ष्मापस्य संघो ध्रुवं,
धन्यो यस्य गृहांगणं स चरणांभोजैः पुनीतेतराम् ॥
किं ब्रूमः फलमस्य तद्वरतवयोऽर्चत्यमुं संमदात्,
श्रीरप्यस्य ग्रहे स्थिराः प्रतिभुवः श्रीजैनपादा इमे१६२

मान्यरिति । क्ष्मापस्य राज्ञः परिग्रहः परिकर इव तीर्थपतेः तीर्थकरस्य ध्रुवं निश्चितं संघो मान्यः । यथा राज्ञः परिवारो मं-

इत्यादिर्मान्यो भवति तथा । स संघः स्वचरणांभोजैः निजपदकमलै-र्यस्य पुरुषस्य गृहांगणं पुनीततरां अतिशयेन पवित्रयति स पुरुषो धन्यः कृतपुण्यः । अस्य संघार्चकस्य पुरुषस्य किं फलं ब्रूमः । तत्तस्मात् कारणात् यः पुरुषोऽमुं संघं अर्चति पूजयति । किंवत् । भरतवत् । यथा भरतचक्रवर्त्ती संघं पूजयामास । कस्मात् । संमदात् हर्षात् । अस्य संघार्चकस्य गृहे मंदिरे श्रीरपि लक्ष्मीरपि स्थिरा निसा भवति । तत्र लक्ष्म्या निश्चलतायां इमे प्रत्यक्षा श्रीजैनपादाः प्रतिभुवः साक्षिणः पट इति लोकोक्त्या ॥ १६२ ॥

जेवी रीते राजाने पोतानो मंत्री विगेरे परिवार मान्यकारी होय छे तेवीरीते श्रीतीर्थंकरने निश्चे संघ मान्यकारी छे. माटे ते संघ पोताना चरणकमले करीने जे पुरुषना घरने पवित्र करे छे, ते पुरुषने धन्य जाणवो. ए संघनुं पूजन करनारने फल तो शुं कहीये ? परंतु जे पुरुष भरतराजाना पेठे अति हर्षथी ए संघनुं पूजन करेछे तेना घरने विषे लक्ष्मी निश्चलपणे निवास करे छे तेमां आ प्रत्यक्ष जिनेश्वरना चरणोज साक्षरूप छे ॥ १६२ ॥

एक काव्यथी फाल्गुन चातुर्मासद्वार कहे छे.

नीत्वा क्षेत्रे पवित्रे घनसमयममी संयता राजहंसा-
स्तत्तत्स्थाने विजहुःसुकृतिभिरनिशं जाड्यशीतं च भिन्नम्
शीलक्षोमैस्तपोग्निव्रतनियमगृहैर्भावनागंधतैलै-
यत्राचार्यार्कगोभिर्हिमसमयचतुर्मासकं तन्मुदे स्तात् ॥

नीत्वेति । अमी संयताः साधवस्ते एव राजहंसाः पवित्रक्षेत्रे

यनसमयं वर्षाकालं नीत्वातिवाह्य तत्तत्स्थाने तस्मिन् तस्मिन् देशे विजहुर्विहारंचक्रुः । यत्र हिमसमयचतुर्मासके सुकृतिभिः पुण्यवद्भिः अनिशं निरंतरं जाड्यमेव शीतं भिन्नं । कैः । तत्र हिमसमयचतुर्मासके शीलमेव क्षौमानि पट्टदुकुलानि तैर्जाड्यशीतं भिन्नं । व्रतानि च नियमास्त एव गृहाणि तैः कृत्वा जाड्यशीतं भिन्नं । भावना एव गंधतैलं तेन कृत्वा जाड्यशीतं भिन्नं । आचार्या गुरव एव अर्कगोभिः सूर्यकांतिभिः कृत्वा च जाड्यशीतं भिन्नं । यथा हिमसमये क्षौमैरग्निना गृहेण सुगंधद्रव्याभिश्रिततैलैश्च सूर्यकांतिभिश्च कृत्वा शीतं ह्रियते तथा फाल्गुनचतुर्मासके शीलेन तपोभिश्च व्रतैश्च नियमैश्च भावनाभिश्चाचार्यवाणीभिश्च जाड्यं मूर्खत्वमपह्रियत इति भावः । तद्धिमसमयचतुर्मासकं मुदे हर्षाय स्तात् भवतु ॥ १६३ ॥

आ साधुरूप राजहंसो पवित्र क्षेत्रने विषे वर्षाकालने निर्गमन करी ते ते देशमां विहार करे छे के, जे देशमां शियालाना चार मासने विषे पुण्यवंत माणसो शीलरूप वस्त्र, तपरूप अग्नि, व्रत अने नियमरूप घर, भावनारूप सुगंधी तेल अने आचार्यरूप सूर्यनो ताप इत्यादिवडे मूर्खपणारूप ताढने दूर करे छे; ते फालगुन चोमासुं हर्षने अर्थे थाओ ॥ १६३ ॥

एक काव्यथी रजःपर्व कहे छे.

चातुर्मासिकपर्वसंभवतपोवह्निस्तदावश्यक-
भ्रश्यत्कर्मदलोच्छ्रितस्थगणकस्तोमेऽत्र भस्मीकृते ॥
प्रातर्वंदनके मुखांशुकविविध्याजादिकीर्णेऽभितः,

धन्योऽर्हद्गुणफाल्गुनोऽमलरजाः स्यादागमांभःप्लवैः॥१६४॥

चातुर्मासिकेति । धन्योऽर्हद्गुण एव फाल्गुनो मास आगमांभःप्लवैः सिद्धांतजलस्नानैरमलरजा निःपापः स्यात् । किं सति । चातुर्मासिकपर्वसंभवं तप एव वह्निरग्निस्तस्मात् तदावश्यकेन चातुर्मासपर्वप्रतिक्रमणेन भ्रश्यंति पतंति कर्मणां दलानि खंडानि तान्येवोच्छ्रितानि स्थगणकानि गोमयानि तेषां स्तोमे समूहे भस्मीकृते सति । किं भूते ! प्रातर्वंदनके मुखांशुकविधेर्मुखवस्त्रिकाकर्तव्यस्य व्याजात् कपटात् । अभितः सर्वासु दिक्षु विकीर्णे विक्षिप्ते सति।

चातुर्मास पर्वथी उत्पन्न थयेला तपरूप अग्निमां चातुर्मास पर्वना प्रतिक्रमणवडे पडतां एवां कर्मना दलरूप उच्छलतां छाणानो समूह भस्म थये छते अने ते भस्म प्रातःकालना वंदनमें विषे मुखवस्त्रिकाना मीषथी चारे तरफ उडी गये छते अरिहंतना गुणरूप धन्य एवो फाल्गुन मास आगमरूप जलना स्नानथी पापरहित थाय छे ॥ १६४ ॥

बे काव्यथी इंद्र महोत्सव द्वार कहे छे.

स्पर्द्धा महत्सु नरवाक् शुकवत् क्षमाय,
सत्यं पुनः पदमुपैति जनः समर्थः ॥
मर्त्या हि पंचमगुणास्थितिमुक्तियोग्याः,
श्राद्धेषु तज्जिनमहेऽनुविदिंद्रताऽपि ॥१६५॥

स्पर्द्धेति । महत्सु महापुरुषेषु स्पर्द्धा अहंकारः क्लमाय श्रमाय स्यात् । यथा नराणां मनुष्याणां वाक् नरवाक् शुकवत् शुकेष्विव ॥ इति सत्यमेव । समर्थो जनः पुनः पदं स्थानमुपैति प्राप्नोति ॥ हि यस्मात्कारणात् मर्त्याः पंचमगुणस्थितिमुक्तियोग्या वर्तंते । तत्तस्माद्धेतोर्जिनमहे तीर्थंकरकल्याणके श्राद्धेषु श्रावकेषु इंद्रतापि अयोग्या । देवेंद्रस्य चतुर्थगुणस्थानस्थायित्वात् ॥ १६५ ॥

जेवी रीते माणसनी भाषा पोपटने श्रम माटे थाय छे तेम म्होटा पुरुषने विषे स्पर्धा करवी ए पण श्रमने माटेज थाय छे. ए सत्य छे. माणसो पांचमी गुणस्थिति अने मुक्तिने योग्य छे. तो जिनेश्वरना कल्याणकने विषे श्रावकोने इंद्रपणुं पण अयोग्य छे. कारण के, इंद्रने पण चोथी गुणस्थितिये रहेवापणुं छे. ॥ १६५ ॥

देवैर्जिनस्य यदि जन्ममहादि चक्रे,
न श्रावकैरनुकृतिः क्रियतां तदेषाम् ॥
स्वः शक्रदंतिमदतुंबरुगानरंभा-
नृत्यादि चेद्भुवि न कोऽपि ततः करोतु ॥ १६६ ॥

देवैरिति । यदि जिनस्य रागद्वेषादिजेतुर्जन्ममहादि जन्ममहोत्सवादि चक्रेऽकारि । कैः । देवैः । तर्हि श्रावकैरेषां जिनजन्ममहोत्सवादिनां अनुकृतिरनुकारो न क्रियतामपि तु क्रियतामेव ॥ दृष्टांतमाह ॥ यदि स्वः स्वर्गे शक्रदंतिमदश्च तुंबरुगानंच रंभ-नृत्यं च तदादि इंद्रगजमददेवगंधर्वगीतरंभानृत्यादि अस्ति चेत्त-

तस्मिंहि भुवि पृथिव्यां मदं गानं नृत्यादिकं च कोऽपि कश्चिन्न करोतु। अपि तु मदगाननृत्यादीनि करोतु तदनुकारमात्रमेव.१६६

जो देवताए जिनराजना जन्म महोत्सवादि कर्यो छे, तो श्रावकोए ते प्रमाणे शुं न करवुं जोइए ? अर्थात् करवुं जोइए. दृष्टांते कहे छे के, जो स्वर्गमां ऐरावत हाथीनो मद, तुंबुरु नामना गंधर्वनुं गान अने रंभा अप्सरानुं नृत्य इत्यादि छे तो पछी पृथ्वीने विषे मद, गान अने नृत्यादि कोइ शुं न करे? अर्थात् करे. १६६

हवे बे काव्यथी महापूजाद्वार कहे छे.

जैनार्चयापि नवभिः कुसुमैरशोक
उच्चोच्चसंपदभवन्नवसेवधीशः ॥
लक्षार्चनेन तु फलं जिन एव वेत्ति,
सद्भूस्थकालघनसिक्तसुबीजवत्तत् ॥ १६७ ॥

जैनेति । अशोकः अशोकनामा मालिको नवभिः कुसुमैर्नवसंख्यैः पुष्पैरपि कृत्वा जैनार्चया वीतरागपूजया हेतुभूतया उच्चोच्चाधिकाधिकसंपदो लक्ष्मीर्यस्य स इदृशः सन् नवसेवधीशः नवसंख्यानां सेवधीनां निधानां ईशः स्वामी अभवत् । तु पुनः लक्षार्चनेन लक्षद्रव्येन जिनपूजया यत्फलं स्यात् तत्फलं जिन एव वेत्ति जानाति केवलज्ञानभावात् । किंवत् । सद्भूस्थं प्रधानभूमिवर्त्तमानं वर्षाकालमेघेन सिक्तं प्रधानबीजं तद्वत् ॥ १६७ ॥

अशोक नामनो माली नव पुष्पोवडे करेली जिनराजनी

थी अधिक संपत्तिवालो थइ नवनिधाननो अधिपति थयो. तो प-छी लक्ष द्रव्य खर्चीने करेली जिनराजनी पूजानुं फल तो उत्तम भूमिमां रहेलां अने वर्षाकालना मेघथी सिंचन थयेलां श्रेष्ट बीज-नी पेठे केवली एवा जिनराज पोतेज जाणे छे. ॥ १६७ ॥

आश्चर्यकारि फलमप्यतुलं प्रदास्य
त्याश्चर्यभंगिभिरियं विहिता जिनार्चा ॥
कार्यं हि कारणगुणेन भवेत्तु चित्रं,
पुष्पैरिमैस्त्रिदशवृक्षफलप्रसूतिः ॥१६८॥

आश्चर्येति । आश्चर्यभंगिभिर्विस्मयकारिणीभिर्विच्छित्तिभिर्विहिता कृता इयं प्रत्यक्षा जिनार्चा जिनपूजा आश्चर्यकारि आश्चर्यकारकं अतुलं निःसमान फलमपि समृद्ध्यादिकमपिप्रदास्यति एवं कथं ज्ञायते । हियस्मात् कारणगुणेन कार्यं भवेत् समवायकारणभूतैस्तंतुभिः पटकार्यं स्यात् । अत्र तु चित्रतत् । इमैः पार्थिवैः पुष्पैस्त्रिदशवृक्षफलप्रसूतिजातेत्याश्चर्यम् ॥ १६८ ॥

आश्चर्यकारक रचनावडे करेली जिनराजनी पूजा निश्चे आ-श्चर्यकारी घड्ड समृद्धि विगेरे ते पूजानुं फल आपे छे. कारण के, कारणना गुणथी पटले एकठा थयेला कारणरूप तंतु (तागडा) थी, पट (वस्त्र) रूप कार्य थाय छे. आहिं आश्चर्य एज छे के, आ पृ-थ्वीमां उत्पन्न थयेला पुष्पथी कल्पवृक्ष जे फल आपे छे ते फल मले छे.

हवे बे काव्यथी चैत्यपरिपाटी द्वार कहे छे.

अप्येकजैनभवनस्नपनादिना य-
द्भावादुपार्जि सुकृतं शिवकृद्भवद्भिः ॥
स्थानं क चैत्यपरिपाटिकयार्जितस्य,
ज्ञातं महत्स्तुतिकृतां हृदयानि संति ॥ १६९ ॥

अप्येकेति । भावादंतरंगमीसा एकस्य जिनभुवनस्य स्नपनादिनापि स्नात्रविलेपनपूजादिनापि यत् शिवकृत् कल्याणकारकं सुकृतं पुण्यं भवद्भिर्युष्माभिरुपार्जितं । चैत्यपरिपाटिकयार्जितस्य पुण्यस्य बहुचैत्यजिनपूजयोपार्ज्जितस्य धर्मस्य स्थानं क । तस्य पुण्यस्य स्थानं न ज्ञायते । अथ ज्ञातं । महत्स्तुतिकृतां महोत्सववर्णनकारकाणां हृदयानि चैत्यपरिपाटिकयार्जितस्य सुकृतस्य स्थानानि संति ॥ १६९ ॥

तमे भावथी एक जिनराजनी पूजावडे मोक्ष आपनारुं पुण्य मेलव्युं, तो पछी चैत्यपरिपाटीथी मेलवेला पुण्यनुं स्थान क्यां ? हा ! जाण्युं ? महोत्सवने विषे स्तुति करनाराओनां हृदयो चैत्यपरिपाटीथी मेलवेलां पुण्यनां स्थान होय छे ॥ १६९ ॥

अद्योदियाय सुदिनो भवतां कला वा,
जज्ञे यदल्पवसुनापि हि भूरिलाभः ॥

भक्त्या सुलभ्यदलपुष्पफलोपहारैः ॥ १७० ॥

अद्येति ॥ हे भव्याः । अद्य भवतां युष्माकं सुदिनो मनोज्ञ-दिवस उदियाय उदयं प्राप । वा पुनः कला विज्ञानं उदियाय जज्ञे । यद्यस्मादल्पकममुना स्तोकद्रव्येणापि हि निश्चितं भूरिलाभः प्रचुरलाभो जज्ञे बभूव । स च कथं ज्ञायते भवद्भिः । सुलभ्यैः सुखेन लभ्यैर्दलानां पत्राणां पुष्पाणां कुसुमानां फलानां चोपहारैः उपढौकनैः कृत्वा चैत्यावलीषु जिनप्रासादश्रेणीषु पूजया यत्पुण्यं भक्त्या मनोहर्षेण उपार्जि तत्पुण्यं शिवाय मोक्षायाभूत् । इति हेतोःस्तोकद्रव्येण बहुलाभोऽभदिति भावः ॥ १७० ॥

आजे तमारो मनोहर दिवस उग्यो अथवा तो तमारुं उत्तम विज्ञान उदय पाम्युं. कारण के, तमने थोडा धनथी म्होटो लाभ मल्यो. ते लाभ एके, सुखे मेलवी शकाय एवां पत्र, पुष्प अने फलो अर्पण करवारूप जिनमंदिरोमां करेली भक्तिपूर्वक पूजाथी तमे जे पुण्य मेलव्युं ते पुण्य मोक्षने माटे थयुं. आज कारणथी तमने थोडा धनवडे म्होटो लाभ थयो ॥ १७० ॥

हवे त्रण काव्यथी उद्यापन द्वार कहे छे.

( इंद्रवज्रावृत्तम्. )

शुद्धं तपः केवलमप्युदारं,<br>
सोद्यापनस्यास्य पुनः स्तुमः किम् ॥<br>
हृद्यं पयो धेनुगुणेन तत्तु,<br>
द्राक्षासिताक्षोदयुतं सुधेव ॥ १७१ ॥

तपक्रम सिद्ध छे. ते कारणथी आजे ते तपक्रमने विशेष जेम सिद्ध उत्कट निर्धाररूप छे तेथी आ प्रत्यक्ष उद्यापननो विस्तार छे. ॥ १७२ ॥

वृक्षो यथा दोहदपूरणेन,
कायो यथा सद्रसभोजनेन ॥
विशेषशोभां लभते यथोक्ते-
नोद्यापनेनैव तथा तपोऽपि ॥ १७३ ॥

वृक्षेति॥ यथा वृक्षो दोहदपूरणेन वाञ्च्छापूरणेन विशेषशोभां लभते। यथा च कायः शरीरं सद्रसभोजनेन कृत्वा विशेषशोभां लभते। तथा तपोऽपि यथोक्तेन सिद्धांतप्ररूपितेन उद्यापनेन कृत्वा विशेषशोभां लभते ॥ १७३ ॥

जेम झाड इच्छा पूरक फल आपवाथी वधारे शोभा पामे अने जेम शरीर उत्तम भोजन करवाथी वधारे शोभा पामे तेम तप पण शास्त्रमां कहेली विधि प्रमाणे उद्यापन करवाथी वधारे शोभा पामे छे. ॥ १७३ ॥

एक काव्यथी ध्वजारोप कहे छे.

भूपच्छत्रगुरूदरावृतिरथाद्येपूपयोगान्मया,
वंशत्वे कटसुंडकादिषु जनाश्चाराधिता भूरिशः ॥
नैतक्कापि महत्वमापि विलसत्केत्वग्रहस्तो रणत्-
घंटावाग्भिरिति ध्वजस्त्वरयते वो देवताराधने ॥

भूपेति ॥ हे लोकाः । वंशमयो ध्वजः केतुर्जिनदेवताराधने रणच्छद्रायमानघंटावाग्भिः कृत्वा इति पूर्वोक्तप्रकारेण वो युष्मान् त्वरयते । किं रूपो ध्वजः । विलसद्वालयत् केतुरेव पताकेवाग्रहस्तो यस्य स तथा।अन्योऽपि हस्तं चालयन् कार्ये जनं त्वरयते । घंटाशब्देन यत्कथयति तदेवाह । हे लोकाः । एतदीदृशं महत्त्वं क्वापि स्थाने न प्रापि न लेभे । मयावंशत्वे भूपच्छत्रगुरुदराद्यातरथाचेपु कटसुंडकादिपु च भूरिशो जना उपयोगादाराधिताः परमेतदीदृशं महत्त्वं क्वापि स्थाने न प्रापि न लभे॥१७४॥

हे लोको ! जिनेश्वरना प्रासाद उपर रहेलो वांसरूप ध्वज उडता लुगडा रूप हाथने लांबो करीने घागति पथी घुघरीयोना शब्दथी एम कहे छे के, में राजाओना छत्रमां, रथनी धजामां, घाडींमां तेमज सादडी अने सुंडलादिकमां उपयोगथी बहु माणसोने सेव्या छे, तो पण आवुं म्होटापणुं पाम्यो नथी ॥ १७४ ॥

हवे एक काव्यथी अष्टविध पूजा कहे छे.

नैवेद्यैः सजलैः शिवाध्वसुखदं स्पष्टं समं शंवलं,
धूपेनोर्ध्वगतिः सुगंधितदिशावासेन शुभ्रं यशः॥
नृस्वर्गादिफलं फलैश्च कलशैर्जैनाटकार्चात्मनः,
पुष्पैर्लोकशिरःस्थितिः शिवतनुर्दीपैर्जिनार्चाफलम्

नैवेद्यैरिति । सजलैः पानीयसहितैर्नैवेद्यैः कृत्वा शिवाध्वसुखदं मोक्षमार्गसुखदायकं स्पष्टं प्रकटं समं सार्द्धं शंवलमेव भवति ।

धूपेन धूपपूजया ऊर्द्धगतिर्भवति । सुगंधितादशावासेन सुरभीकृत दशादिशावासेन एवंविधेन चंदनकर्पूरादिलक्षणेन वासेन शुभ्रं धवलं यशो भवति । फलैः फलपूजया नृस्वर्गादि मनुष्यस्वर्गलो कसंबंधि फलं स्यात् । कलमैरक्षतपूजया आत्मनः स्वस्य जैना टकार्चा स्यात् अक्षतत्वं भवतीत्यर्थः । पुष्पैः पुष्पपूजया लोकशिरः स्थितिः लोकशिरोवस्थानं भवति । दीपैर्दीपपूजया शिवतनुर्मोक्ष शरीरं भवतीति पूर्वोक्तकृताया जिनार्चाया जिनपूजायाः फ लम् । यादृशीजिनोऽर्च्यते तादृशं लभ्यते फलं । कारणानुरूपत्वात् कार्यं स्यात् ॥ १७५ ॥

जल सहित नैवेद्यवडे जिनराजनी पूजा करवाथी मोक्षमार्गने विषे सुख आपनारुं प्रगट भायुं मले छे. धूपवडे पूजा करवाथी उंची गति, सुगंधि दिशा करवाथी उज्वल यश, फलवडे पूजा क रवाथी मनुष्य अने देवादि फल अने चोखावडे पूजा करवाथी अक्षतपणुं ( नहिं क्षय थवापणुं ) प्राप्त थाय छे. वली पुष्पवडे जि नराजनी पूजा करवाथी सर्व लोक उपर निवास अने दीपवडे पू जा करवाथी मोक्षशरीर आवी मले छे; माटे जेवी रीते पूजा क रीए तेवुं फल प्राप्त थाय छे. ॥ १७५ ॥

हवे एक काव्यथी अष्टमंगल कहे छे.

आदर्शोदितकेवलार्द्धरसमैश्वर्यश्च भद्रासना-
ब्रह्मांडस्य शरावसंपुटतनोर्यः कामकुंभः पुरः ।
श्रीवत्सांगमिव स्फुटश्च तनुते नित्योत्सवःस्वस्तिका-

नंदावर्तवदद्भुताकृतिकृतानंदः स वोऽव्याज्जिनः ॥

आदर्शेति । स जिनो वो युष्मानव्यात् रक्षतात् । किंभूतः । आदर्शवदुदिता केवलर्द्धि केवलज्ञानलक्ष्मीर्यस्य स तथा । भद्रासनादसममैश्वर्यं यस्य स तथा । शरावसंपुटतनोर्ब्रह्मांडस्य पुरोऽग्रे यो जिनः कामकुंभः पूर्णकलशः । स्वस्तिकात् श्रीवत्सांगमिव स्फुटो मत्सो नित्यं सर्वदा उत्सवो यस्य स तथा । नंदावर्तवत् अद्भुतया आश्चर्यकारिण्या आकृत्या आकारेण कृत आनंदो येन स तथा ॥ १७६ ॥

जेमने दर्पणनी पेठे केवल प्राप्त थयुं छे. भद्रासनथी जेमने म्होटुं ऐश्वर्य प्राप्त थयुं छे. पात्रना संपुट समान शरीरवाला ब्रह्मांडनी आगल जे पूर्णकलश रूप छे. स्वस्तिकथी जेमने श्रीवत्सांगनी पेठे प्रत्यक्ष हमेशां उत्सव छे. नंदावर्तनी पेठे जेमणे अद्भुत आकृतीथी आनंद उपजाव्यो छे एवा ते जिनराज तमारुं रक्षण करो.

हवे ये काव्यथी मुक्तिद्वार कहे छे.

मुक्तेःसौख्यप्रमाणं भवतु सुरगिरिः सोऽस्ति वा योजनानां
लक्षं वार्द्धिःस्वयंभूरमण इति पुनः सोऽस्ति रज्जुप्रमाणः।
लोकातीतं तदेतज्जिनपतिरपि वा नोपमातुं प्रगल्भो,
भूभृद्भोगानुभूतिं स्वजनमनुवदन् यद्वदज्ञः पुलिंदः ॥१७७॥

मुक्तेरिति । सुरगिरिर्मेरुपर्वतो मुक्तेर्मोक्षस्य सौख्यप्रमाणं

सौख्यप्रमाणरूपो भवतु । परं स मेरुर्योजनानां लक्षमस्ति । अथवा स्वयंभूरमणो वार्द्धिः समुद्र इति प्रमाणं भवतु। परं सोऽपि स्वयंभूरमणः समुद्रः रज्जुप्रमाणोऽस्ति । एतयोः प्रमाणं ज्ञायते लोकमध्यत्वात् । तन्मुक्तेः सौख्यप्रमाणं लोकातीतमस्ति । अतो ज्ञेयमेतत्सौख्यं जिनैर्ज्ञायते परं जिनैरपि उपमानेन दृढीकर्तुं न शक्यते इत्येवाह ॥ जिनपतिरपि एतन्मुक्तेः सौख्यप्रमाणमुपमातुमुपमाने सदृशीकर्तुं न प्रगल्भो न चतुरो न बुद्धिमानिति यावत् । दृष्टांतमाह । पुलिंद्रो भिल्लपतिर्भूभृद्भोगानुभूतिं राजेंद्रभोगलक्ष्म्या अनुभवं जानन्नपि स्वजनं प्रति वदनूसन् यद्वदज्ञो यथा मूर्खो जातः

मोक्षसुखनुं प्रमाण मेरुपर्वत जेटलुं म्होटुं कहीये तो ते घटतुं नथी. 'कारण के, मेरुपर्वत लाख योजननो छे अने मुक्तिसुख बहु म्होटुं छे. वली मोक्षसुखनुं प्रमाण स्वयंभूरमण समुद्र जेटलुं कहीये तो ते पण घटतुं नथी; कारण ते पण रज्जुप्रमाण एटले दोरडीवती मापी शकाय तेटलो छे. अर्थात् मेरुपर्वत अने स्वयंभूरमणसमुद्र ए बन्ने लोकमां छे माटे तेमनुं प्रमाण जाणी शकाय छे अने मोक्षसुखनुं प्रमाण जाणी शकातुं नथी. ते मोक्षसुख तो लोकनी बहार छे; माटे ते सुख जिनेश्वरो जाणी शकता हशे; परंतु जिनेश्वरो पण राजाश्री भोगलक्ष्मीना अनुभवने जाणता छता पण पोताना कुटुंबीने कहेवा समर्थ नहि थयेला भील्लनी पेठे ते मोक्षसुखने उपमाथी दृढ करवाने समर्थ थता नथी. ॥ १७७ ॥

यत्पादांबुजभृंगतामविरतं भेजुस्त्रिलोकीजना,
यश्चिंतामणिवत्तदीयरुदयाभीष्टार्थसंपादकः ॥

नोप्यर्हन्महितो यदर्थमतिशं तत्तत्पस्ततवा-
न्नाभिष्टं हृदि कस्य कस्य तदहो नैःश्रेयसं मंगलम्॥१७८

यत्पादेति। त्रिलोकीजना लोकत्रयलोका यस्यार्हतः पादांबु-
ो भृंगतां भ्रमररूपत्वमविरतं निरंतरं भेजुराश्रितवान्। यश्च
जेर्गश्चितामणिवत् तदीयहृदयाभीष्टार्थसंपादकस्त्रिलोकीजनमनो-
वांछितार्थदायकोऽस्ति। सोऽपि महितो पूजितोऽर्हन् देवो
यदर्थं मुक्त्यर्थमनिशं सदा मुदितो हृष्टःसन् तत्प्रसिद्धं तपस्ततवान्
तेपे। अहो आश्चर्ये तन्नैश्रेयसं मोक्षो मंगलं मांगलिक्यं कस्य क-
स्य पुरुषस्याभीष्टं न अपि तु सर्वस्यापि ॥ १७८ ॥

त्रणलोकना प्राणीयो जेमना चरणकमलने भमरानी पेठे सेव
न करे छे अने जे चिंतामणि रत्ननी पेठे ते सेवा करनाराने मनो
वांछित आपेछे ते पूज्य श्री अरिहंत प्रभुए मुक्तिने माटे निरंतर
जे ने तप कर्युं, अहो! आश्चर्य छे के, कोना कोना हृदयने विषे
मोक्षरूप मांगलिक इष्ट नथी ? अर्थात् सर्वने इष्ट छे. ॥ १७८ ॥

हवे एक काव्यथी ग्रंथकर्ता पोतानुं नाम दर्शावे छे.

श्री वज्रसेनस्य गुरोस्त्रिपष्टि-
सारप्रबंधस्फुटसद्गुणस्य ॥
शिष्येण चक्रे हरिणेयमिष्टा,
सूक्तावली नेमिचरित्रकर्त्रा ॥ १७९ ॥

श्रीवज्रसेनेति । इयं प्रत्यक्षेष्टा सूक्तावली सुभाषितावली ह-
रिणा हरिनाम्ना पंडितेन चक्रे कृता । किंभूतेन हरिणा । श्री व-
ज्रसेनस्य गुरोः श्री वज्रसेननामाचार्यस्य शिष्येण विनयेन ।
किं भूतस्य श्रीवज्रसेनाचार्यस्य । त्रिषष्टिशिलाकापुरुषचरित्र
एव प्रबंधस्तेन कृत्वा स्फुटः प्रकटः प्रधानगुणो यस्य स
तथा तस्य । पुनः किं विशिष्टेन हरिणा । नेमिचरित्रकर्त्रा
नेमिचरित्रकारकेन । येन नेमिचरित्रकारकेन हरिकवीश्वरेणेयं
सुभाषितावली कृता ॥ १७९ ॥

त्रिशष्टिशलाका पुरुष चरित्रना कर्ता श्री वज्रसेन गुरुना शिष्य
एवा हरि नामना कवीश्वर के, जेमणे श्री नेमिनाथनुं चरित्र रच्युं छे ते
कवीश्वरे आ सूक्तमुक्तावली (कर्पूरप्रकर) नामनो ग्रंथ रच्यो छे. १७९

## ॥ इति कर्पूरप्रकर समाप्तम् ॥